# वीरवैरागिचरितम्

[ नाम पद्यकाव्यम् ]

लेखकः

श्री सुदर्शनशर्मणा

HIG Block 61, B. 3, Sector VI,

Parwanoo-173 220

परवाणुस्थलीय

1995

वीरवैरागिचरितम् नाम गद्यकाव्यम्
फ़ाज़िल्कास्थलीय सर्वकारीय महाविद्यालयीय-
प्राचार्य (प्रिंसिपल) भूतेन
**श्री सुदर्शनशर्मणा** विरचितम्
[ प्राक्तनीय वण्ठिण्डास्थलीय सर्वकारीय-राजेन्द्रमहाविद्यालयीय
संस्कृत विभागीयाध्यक्षपदात् पदोन्नतेन १. ८. ६२ तारिकायाः ]

"VĪRAVAIRĀGICARITAṂ"
nāma gadyakāvyaṃ

*Written by*

**Shri Sudarshan Kumar Sharma**
Pricipal, M. R. Govt. College
FAZILKA Distt. Ferozepur-152 123

(Formerly Senior Lecturer-Cum
Head Deptt. of Sanskrit)
Govt. Rajindra College,
BATHINDA (Pb.)-151 001
uptill 31. 7. 1992.

●

मूल्य :

●

मुद्रक :
**विश्वेश्वरानन्द वैदिक शोध संस्थान प्रेस,
साधु आश्रम, होश्यारपुर-१४६ ००१
(पंजाब)**

# अथ प्रास्ताविकम्

वीरवैरागिचरितं गद्यकाव्यं मुद्रापणाय विश्वेश्वरानन्द-वैदिक-शोधसंस्थानेन स्वीकृतं अनेन तत् प्रति मम महती कृतज्ञता वर्तते । काव्यं सम्पूर्णं सत् पठकेभ्यः मया समर्प्यते । अस्य मुद्रापणाय पुनः योऽधिकारः वर्त्तते स मम सुपुत्राय विपिनशर्मणे मया दीयते । अन्ये सर्वेऽधिकाराः मेऽधीनाः वर्त्तन्ते तेऽपि । विश्वसिमि काव्यमिदं पाठकेभ्यः रुचिमाधापयिष्यति ।

**सुदर्शनकुमारः शर्मा**
अवकाशप्राप्तः प्राचार्यः
HIG Block 61,
B. 3, Sector VI,
Parwanoo - 173 220

*दिनाक : १८. ७. ९५*

# अनुक्रमणी


| | | पृष्ठाङ्काः |
|---|---|---|
| अथ प्रथम उच्छ्वासः | ... | १ |
| अथ द्वितीय उच्छ्वासः | ... | २२ |
| अथ तृतीय उच्छ्वासः | ... | ३५ |
| अथ चतुर्थ उच्छ्वासः | ... | ४८ |
| अथ भरतवाक्यम् | ... | ६७ |

# अथ प्रथम उच्छ्वासः

सा भारती भारतभूविभागे
विद्वत्प्रकर्षैकविधानसत्का ।
नानाविधा नूनमनूनभावैः
संक्रान्तिविक्रान्तिगता नमस्या ॥ १ ॥

वल्मीकतो जन्मविधाय वाग्मी
योऽभूज्जगत्यां जगदेकवन्द्यः ।
रामायणीं काव्यकथां निबध्य
आद्यः कविः ध्यानरतोहिरेमे ॥ २ ॥

नमः ख्यातेतिवृत्ताय व्यासाय कविवेधसे ।
जगदैतिह्यबोधाय कृता यद्भारती कथा ॥ ३ ॥

गद्यं कवीनां निकषं वदन्ति
तद्गद्यते चे - द्विधिनोपपन्नम् ।
विद्वान्मनीषी मनसां विदाङ्कृत्
तद्गौरवे गानरतो नु भूयात् ॥ ४ ॥

पद्यं पदन्यासहितम् निगद्यम्
नैवान्वयं व्याप्य गतिं समेति ।
छन्दोगतं वृत्तविशेषगद्यम्
संख्यानितं चैव विधिं विधत्ते ॥ ५ ॥

आख्यायिकाख्यानगतिं प्रपद्य
पूर्वं गताः बाणविधाः जगत्याम् ।
तेषाम् कथाकौतुकमाकलय्य
रीतौ कुरीतिर्नहि तर्कनीया ॥ ६ ॥

क्रियान्विता वेदविदां सुबुद्धिः
सा लौकिकी लोकधिया परीता ।
संमूढभावैकयुता पुराणी
विज्ञानवैशद्यविचारसत्का ॥ ७ ॥

वीरो रसः ख्याततमो हि लोके
उत्साहसाह्यैक - विभाव - मूलः ।
षाड्गुण्यसौहार्द - समेत - सारः
सोपाय-सापय - तुलातरस्वी ॥ ८ ॥

गद्यैककृद्दण्डिकविः प्रतीतः
गुप्तान्वये चोत्तरवंशजानाम् ।
विद्रोहरोहैकविवादवादे
कौमारचक्रैककथां बबन्ध ॥ ९ ॥

प्रत्यक्षरश्लेषमयप्रबन्धी
सद्बन्धकं गद्यमकृत्सुबन्धुः ।
कन्दर्पदर्पैककृतेः प्रकेतम्
कन्दर्पकेतोश्चरितं चचार ॥ १० ॥

बाणः कवीनामिह चक्रवर्ती
भासैककर्तृत्वविवादधर्षी ।
स्थाण्वीश्वरे राजनि वृत्तिवर्त्ती
कादम्बरीगद्यकथां चकार ॥ ११ ॥

हर्षस्य राज्ञश्चरितं चिकीर्षुः
कारुण्यकोशं च शुचं समेत्य ।
राज्यश्रियो बौद्धनतिं विधाय
वैधव्यदुष्टादुरितं ददाह ॥ १२ ॥

कादम्बरी कीर्त्तिमतां विनोदः
संकीर्त्यते रागरतैः समाजे ।
संसेव्यमाना ननु मोहमूढैः
कादम्बरी रागरतिं न धत्ते ॥ १३ ॥

सम्पूरिता नैव युगे स्वकीये
पुत्रस्तदीयश्च पुलिन्दसंज्ञः ।
संज्ञां विधायोत्तरभागसत्कां
वाङ्माधुरीवैभवमाततान ॥ १४ ॥

नेता नराणां ननु हर्षराजः
हर्षे स्वकीये खलु लब्धकीर्तिः ।
नाट्ये कलाकौशलिकं विधाय
वासन्तिकीं रागरतिं ततान ॥ १५ ॥

चौरः कविर्बिल्हणनामधेयः
कामातिगीं गानविधां विधाय ।
पञ्चाशिका - पद्यरतौ - रसाढ्यः
साहित्यसाह्ये सुमनाः बभूव ॥ १६ ॥

सः बिल्हणः कल्हणपूर्ववर्त्ती
स्वां विक्रमाङ्कीयकृतिं निधाय ।
सैतिह्यसंस्कार - सभाजनाढ्यः
काव्यं महत्कायमुवाच धीरः ॥ १७ ॥

देवोत्तरः सोम इतीह रक्तो
यशस्वियोधेषु कविक्रियालुः ।
वाग्भैरवीं रौद्ररसां विविच्य
तं मारिदत्तं चरिते निनिन्द ॥ १८ ॥

सः साहसाङ्कं च नवं विचार्य
चारित्र्यचर्यां च चचार चित्रे ।
सः पद्मगुप्तः परमारराजं
सिन्धुं प्रभायां शशिनः ससञ्ज ॥ १९ ॥

भोजाश्रयो सः धनपालनामा
गद्यकृतां पंक्तिनिविष्टमूर्त्तिः ।
कथाद्वयीवादविवादमोहे
त्राणं धिया कर्मणि चानुमेने ॥ २० ॥

वादिष्विभो वादरदैर्विवादी
वादीभसिंहश्च नदन् सनादम् ।
वादीभचिन्तामणिवादयुक्तः
चिन्तामणिं गद्यमुवाद धीरः ॥ २१ ॥

धन्यश्च सः बादविदां विनोदी
सः सोड्ढलश्चञ्चुर - चारचारी ।
कीरं हि तं चित्रशिखं सुबुद्धम्
गद्ये निधायात्तनिधिर्बभूव ॥ २२ ॥

बाणश्च सः वामनभट्टनामा
कादम्बरीलासकलस्यमानः ।
प्रोल्लाख्यभूपालमतं विवक्तुं
शृङ्गाररागैकरसे नु रेमे ॥ २३ ॥

वाग्वैभवैर्विक्रमणैकधीरः
त्रिविक्रमो नाम भटोत्तरीयः ।
भङ्गं विधाय श्लिष्टपदैः प्रयस्यन्
चम्पूं नलाख्यां प्रततान काव्ये ॥ २४ ॥

शैवो हि [ना व्यास इति प्रतीतः
नाम्नाऽम्बिकादत्त गुणाकृतिश्च ।
राष्ट्राखिलत्राणपरं प्रवीरम्
गद्ये प्रवाह्यागत आत्मभावम् ॥ २५ ॥

नीरन्ध्रबन्धे विहितात्मभावो
व्याघ्रो हि यो गद्यमतिं बिभर्त्ति ।
चित्रैः पुनर्वाक्यविचित्रबन्धैः
भीतिप्रदोऽप्यर्हति नैव भीतिम् ॥ २६ ॥

पदलालित्यसंविष्टा
वर्णसंसृष्टिसंष्ठुला ।
चित्रैः रसैः समाकीर्णा
नायिकाऽऽख्यायिका मता ॥ २७ ॥

भास्वान्रविर्भारविरित्यभिख्यः
माघागते वर्चसि खिन्नरूपः ।
स्वैश्चित्रबन्धैर्विदुषां विरावैः
माघाभ्रवृन्दौघभयेन दूनः ॥ २८ ॥

दण्डी च सः लोकविदां विनोदी
गद्येपदानां ललितार्थदर्शी ।
नैरोष्ठकैरक्षरडम्बरीणः
स्वां मन्त्रगुप्तीयकथां चकार ॥ २९ ॥

पैशाचिमूलं च बृहत्कथीयं
लुप्तं तमोलीनमहो विपन्नम् ।
सः सोमदेवो विधिनोपपन्नः
काश्मीरकः संस्कृतरूपमाह ॥ ३० ॥

क्षेमेन्द्रनामा ननु दर्शनाढ्यः
विद्वान्मनीषी मनसां विदांकृत् ।
बृहत्कथामञ्जरिकाव्यरूपे
बृहत्कथा - संस्कृतरूपमाह ॥ ३१ ॥

नेपालदेशैकनिवासकारी
बृहत्कथाश्लोकविधानभावात् ।
स्वे संग्रहे सर्गमये विचार्य
बृहत्कथासंस्कृतरूपमाह ॥ ३२ ॥

सः कल्हणो नाम विधेर्नियोगी
काश्मीरदेशं भजनैकशीलः ।
तत्रत्यराज्ञामितिहासमार्गम्
राज्ञां क्रमेणैव निनाय निष्ठाम् ॥ ३३ ॥

प्रारब्धपारं गतिभावलिप्सुः
काव्यक्रियाकौतुककर्मयोगी ।
नाट्यक्रियाकाव्यविधानदर्शी
आख्यायिकाख्यानपरो नमामि ॥ ३४ ॥

यशस्वियुगपुरुषायुरायुष्यो, देवदानवमानवर्क्षवानरकिन्नरयक्ष-गन्धर्वगणगुणागुणगानगूढः, पूर्वापरपारावार-पुलिन-परिवार-प्रत्यन्त-वर्त्ति पयःपूरप्लावितपरिवाहिणी परिपावितो, दक्षिणाब्धिलवणसिन्धु-सरिदम्भः-स्रोतोभिः सिक्तस्थलावलिवनराजिविलिप्तकक्षः ध्वंसा-धानेऽपि धृतिधुरीणो धूर्त्तधुर्यैर्धावितोऽपि धर्मव्यपेक्षी दानवलक्ष्मीलता-परशुः, मानवधीविक्रमध्यानशीलः मध्योदीच्य-प्राच्य-दाक्षिणात्य-दिग्वि-भागव्याप्तकुरु - पाञ्चाल - शूरसेन - मत्स्य-किरातकाशिकोशलावन्ति-मगध - वाह्लीकाभीरकापरान्त - कुकुरगान्धारसिन्धु - सौवीरमद्रकैकेयो वङ्गाङ्ग - कलिङ्ग प्राग्ज्योतिषविदेह सौराष्ट्रैः पाण्ड्यकेरलचोलः महाराष्ट्रविदर्भान्ध्रकुन्तलः कैलासाञ्जनहिमवद्विन्ध्यकिरीटकुण्डलः सप्तसिन्धुप्रसारात्सप्तसैन्धवसनामा सुचारुदर्शनाच्च सुदर्शनद्वीपाह्वयः जम्बूद्वीपस्य द्वीपभूतः आर्याणामावर्त्तनादार्यावर्त्तापरनामा, नवाब्जरम्यो नवाब्दभव्यो, वर्षनवे प्रष्ठः प्रेष्ठश्च पुंसां भरतर्षभास्मभवभावनीनः, विबुधविधिविप्रप्रियः, प्रतापिधीविक्रमविक्रान्तवादी, भीविभ्रम-भ्रंशाशंसी, श्रुतिस्मृतिसाहचर्यैकलीनः, भारत्या भूभारतीनः, दौःष्यन्ति-दौर्दम्यदत्ताढ्यभावः, विश्वस्य विश्वस्य भूकाञ्चीभूतः स्वसंस्कृति-व्याप्तिश्शृङ्गाररागी, जनैर्गणैश्चापि नमस्यरूपः पुराणतत्त्वे पुरातत्त्व-दर्शी प्रशस्तिभिश्चापीतिहासवादी, विद्वत्प्रियो गोष्ठीगतो जगत्याम्, स्वमातरं वन्दने बद्धभक्तिः, जनानां गणानां मनोऽधिनेता, उदात्त-स्वरोऽप्यनुदात्तरागी, धीरोद्धतोऽपि धीरललितः, सगुणग्रामरागीष्व-गुणग्रामरागी, सवनराजिलोऽप्यवनराजिलः, गिरिष्ठोऽगिरिष्ठः प्राकारतोरणविषयी अप्राकारतोरणविषयी, चतुरङ्गबलसमुदितोऽपि चतुरङ्गबलसमुद्धतः, स्फुरत्कलालापकोमलोऽपि स्फुरत्कलालापकठिनः, सविलासोऽप्यविलासः, सुप्रभातोऽप्यप्रभातः, गान्धारग्रामराग्यप्य-गान्धारग्रामरागी, अपञ्चमदिगप्यपञ्चमदिक्, सुदर्शनोऽप्यदर्शनः, शान्तिप्रियोऽप्यशान्तिप्रियः, सखण्डलोऽप्यखण्डलः, सप्तसु नवसु वा द्वीपेषु शेखरीभूतः भरतमुनेर्नाट्यरङ्गप्रसङ्गः रङ्गत्तरङ्गतरङ्गिणीकः भारतानां भृतिभरो भारताख्यो बृहद्देशः ।

यस्मिन् निरस्तसमस्तसुरलोका सुरस्त्रीव सुरसरासरासणी सरस-सारसारणी सम्भृतश्रीका विहितविधीका निहितनीहारनिधीकाश्रित-शाद्वलीना कृतकामकीला वृतवामलीला कृषिकर्मगूढा उत्तरापथीना व्याप्ताखिलोत्तरप्रदेशपञ्चापहिमाचलप्रदेशपुरवरा जाम्बूनदीयाऽधि-

त्यकोपत्यकापचारसञ्चारा चमूश्चरैश्चमत्कृता चरैश्चारचञ्चुरा चरन्महिषाश्वगोगर्दभाश्वतरीतरुणतर्णकोक्षव्रातविहितव्यापारचारिचर्याचरैश्च चञ्चिता पुराकालादेव पुराणपुरुषप्रेरणी प्रियपथिकपाथेया मनोरथशतमनोगतमानिनी विदुषां वेदविदां विश्वविख्यातेतिह्याहारहारिणी द्वीपिद्विपव्याघ्रचमरीभल्लूकमर्कटशिखिजाहकशललशूकरवराहकुक्कुटकीरकलविङ्ककुलीरकूर्मकुलकलिलकान्तारकुलाय - कुल्याकूला हिमाद्रिदरीराजिरमणीया सरित्तटाकवापीशतसमाकुला सस्यश्यामलशाद्वला वनोपवनवस्तुविहितविस्तारा प्रकृतिविकृतिविकासवीथिः अनुत्पन्नरजोभ्रान्तिरपि राजीवरजस्वला प्रकृतिकामिनी कमनीया कृतिविकारविकृतमहीध्रपुरुषवेशपरिवेषा, ज्येष्ठरुद्रप्रद्युम्नसखण्डपरशुखण्डभूतभूभृद्राजिराजिला, कमनीयकान्तारवणरणरणत्का तुषाराद्रितनयासतीसतीत्वपरित्राणपरी तपश्चारचारि - भूतामरत्रिपुरकपटविजयहर्षेश्वराणां पुराणसिद्धानामायतनैरलङ्कृता निसर्गजातोमारुद्रजयगणेशवनानां विविधतपश्चरणस्थलोद्देशदर्शिनो, मानसोत्तरमानसपद्ममहापद्मतारमारक्रमसरः कालियनागशेषनागादिनिर्झरनिलयालया, नीलानन्तनागादिगणसगौरवा, शारदात्रिपुरसुन्दरी कुलवागीश्वरीक्षीरभवानी शिवा ज्वालामुखी शारिकाभद्रकाली शैलपुत्रीमार्त्तण्डगङ्गोद्भेदस्वयमादिप्रख्याततीर्थसमवायपवित्रीकृता बहुविधवृक्षवल्ली विसरसारिता, वचागुल्मगोलोमीकुष्ठाद्यौषधिवनस्पतिव्याप्तभूधरामहेलाधरधृतमूलकन्दकोमला, इलावृद्वर्त्तमानस्रोतोवहद्वारिविरावव्याकुला, विविधवयोविरावव्याप्तविहायसा, कश्यपशाण्डिल्यभृङ्गीशप्रभृति - महर्षिव्याप्तयुगपूर्वा, कुङ्कुमप्रसूत्येकभूमिः तद्रजोविकीर्णगन्धा च द्राक्षाक्षोटटङ्कारुकवातादपारेवतप्रभृतिफलभरितभूरुहा, देवकुलायतनयातयातुधानयक्षकिन्नरासुरसुरप्रतियातना, वितस्तावारिवीचिविक्षुब्धविश्वम्भरा, लोकमत्स्य - स्कन्दभवनजयेन्द्रराजचङ्कुणाद्यनेकबौद्धविहारविहृतिवर्ष्मणी, ज्ञानप्रभदीपाङ्कुरसोमनाथश्रीज्ञानरत्नव्रजशाक्यश्रीभद्रसंघमित्राऽसङ्गवसुबन्धु - कुमारजीवगुणवर्मादिप्रकाण्डविद्वद्भिराजितपूर्वकालीना, वसुगुप्तसोमानन्दकल्लटोत्पललरामकण्ठाभिनवगुप्तक्षेमराजभास्करभट्टनारायणजयरथभास्कर - कण्ठशिवोपाध्यायादिशैवदर्शनदिग्दर्शकैरुपासितदिगन्तराला, रत्नाकरशिवस्वामिसोमदेवाभिनन्ददामोदरगुप्तबिल्हणक्षेमेन्द्रमङ्खवासुदेवजगद्धरशितिकण्ठलोष्टकावतारवल्लभरम्यदेवादिविख्यातकविभिर्जगद्विश्रुति - मानीता, हेलाराजभृङ्गीशनीलछविल्लाकरसुव्रतक्षेमेन्द्रकल्हणजोनराज-

श्रीवरप्राज्यभट्टशुकाख्यैरैतिह्याख्यानपरैरितिहासकृद्भिरुद्भासितभूभारतीना, भरतानन्दवर्धनमहिमभट्टश्रीशङ्कुकरुय्यकाभिनवगुप्तमम्मटाल्लटरुद्रटभल्लटतिलकभट्टादिरीतिरससिद्धान्तालङ्कारकृद्भिर्विशेषितशब्दार्थवैभवविस्तारा, शाङ्र्गधरचरकनरहरिवाग्भट्टदृढवलाद्यद्वितीय वैद्यविशेषविभूषिता भट्टजयन्तभासर्वज्ञादितार्किकपुङ्गवैः प्रथित यशस्या भरतभूभालभूता देशजविदेशजविहारस्थली सौन्दर्यसोदर्या भास्कर्यभास्वीया ऐश्वर्यैशीया सौस्वर्यसौरस्या सौरभ्यरम्भीया उरुवश्योर्वशीवश्यावासुविशेष्या हर्यद्रिस्थितकाश्यपाश्रमाभिख्यया काश्यपर्षिणा जलोद्भवदानवप्रधनपिशुनस्थलवर्ष्मणी सतीसरोवरावरणविख्यातिवरीयसी स्थापितास्थलो काश्यपपुरीतिलब्धापरनाम्नी काश्मीरभूः ।

वितस्तावारिवाहवेशविशालायां यस्याम् नीलनागो नाम नागाधिराजो नितरां नृणां नाथो बभूव। यस्यां च वारिधिवार्विस्तारा विहितवैमल्यविहारा 'डलबूलर' नामधेया नारायणीमूर्तिरिव निहितनारायणिः नृभिर्नाकिभिश्च निध्यान नीरवा निशास्वपि च नितराम् नीरराजीनीराजना निशाकरकरराजिला नीरनिहितनक्षत्रगणदीप्रदीपप्रकरा प्रकारान्तरेण पृथ्वीतलगतपातालप्रवालित पयोवाहपरीवाहवाहि विहायोवेश परिवेषा पयःपूरपूरिताऽऽढ्यानाढ्य हर्म्यकुटीरकुड्मलितकूला कुमुदकुवलयकह्लार - किसलयकोशा हरितविघस विसंष्ठुलपरिसरा जलकुक्कुट सारसहंसश्रेणिश्रितसविरुद्वारिविस्तारा शकुलकुलकेलिकलित कमनीयावर्तवर्त्तुला तरम्बुजोर्वारुक-शाकशृङ्गाटकशुष्कद्राक्षा-शालिधान्य काश्मर्यकुङ्कुमगोधूमतमाखुशस्यकलायहरेणु शिम्बिक-माषसूपतिलव्याप्तोद्यानस्थला सरसीसुरस सीरकषणकषायितक्षेत्रपरिसरा समानसबलतालागन्धरबल गगरीबिलडलतटाकतारतम्या लक्ष्मीलावण्यलक्षणमुकुरायमाणा हिमालयमालभारिणो भार्येव भवानी सपत्नीभूता कैलाशभर्तुर्भर्त्सनाभावभूयसी भुव्येव स्वर्गमापादयन्ती लोकेभ्यः स्वर्ग्यासवर्गेभ्यः भरतभुवः सौभाग्यभाक्त्वं प्रथयति । प्राकृता प्रकृतिरिव परकृता पुरुषैः पुरुषार्थश्रीरिव परुषार्थपराभवभरिता नटस्त्रीव नवे नवे रामे नवाङ्गरागरङ्गत्तरङ्गरङ्गिता रमणीरामणीयक कमनीयकलेवरा कले वरा रोलम्बलम्बलासिका लसत्तरलतरङ्गिणीतरङ्गभङ्गभङ्गिनीका निदाघेऽपि निदाघकरदाह-दग्धदाहज्वरोष्मदिग्धदेहदेहि-हिमदान दानवीरा धान्याङ्कुरैघनाढ्या च वर्षासु वृषस्यन्तीवाराङ्गणेव बरारोहावरोह रूढिरूपरूपिता, शरदिशार-दारद्राघीसी

द्वारदेहलीव वाचाटचटकाद्यनेकचटत्कारचञ्चरीकचणत्कारझल्लरीका, शिशिरेशैत्याहृति हेतिततितमिस्रीणा, हेमन्ते हिमाच्छन्ना सिताम्बराम्बरीणा वसन्ते च सकुसुमैः सर्षपैः सपीतपीता प्रकृत्यैव सौन्दर्यसोदरी सदृषद्दरीणा हिमाकारनीरा किर्मीरकीरा परिवारवीरा नृणां नारकीण-दुःखविस्मारिणीवैराग्येऽपि बहुरागरागा संन्यासेऽपि सोत्प्रासरासा संबाधेऽपि निर्बाधभावा, बहिरङ्गरङ्गत्तरङ्गिणीका हरितापिपीता भरितापि रिक्ता पीतापि रक्ता सौरभ्यरभसाभिभूता सौरम्यरमणीसौम्या हैमहर्म्यमनोहरा मनोहराकृतिकृतिक्रियाकार प्रकारकर्मकरणकर्मठ कर्मकर किर्मीरा कर्बुरिता कुलशैलैः कौलैर्मौलैश्च मालिता मालाकारैः मृगनाभि नाभ्यैर्मृगैश्च मोहनी मनागपि न माननाशनी मणि-मन्त्रौषधिशेवधीना कस्य न काङ्क्षाकरी। भूरियं च वीरसूः धीरधूः प्रकारान्तरैश्च युगयुग्ययूः यूनां योनिः प्रभूणां प्रवहणी वसूनां विषयिणी नितरां नृणां नाकनिष्ठां नीत्वा कार्यान्तरायेष्वपि कण्टकशोधनं कारयन्ती विजिगीषारसरसिकान् जनयन्ती धर्मार्थशास्त्रानुवृत्तिविश्रितान् भावानुत्थाप्य राक्षसवृत्तोन् नृपशून् क्रव्यादानिव हेतिततितरङ्गितान् विधाय विनाशमापादयन्ती चातुर्वर्ण्यैकधात्री भ्रातृधर्मैकभर्त्री मोह-विक्लवान् वराहानिव राक्षसान् मारयन्ती युगे युगे सर्वर्तुवृद्धान् शरदृतुशुद्धान् योधान् योजयन्ती उत्तरे सीमारक्षक भूता सर्वदैव देशस्य स्वातन्त्र्य साधिकैवाभवत्।

धर्मैकग्लानिः सुजनैकहानिः
क्रिया कलेः क्रौर्यकृतित्वमेति।
सद्धर्मसद्भावप्रसारणाय
यौगन्धरिर्योगगतित्वमेति ॥ ३२ ॥

पुरा पौराणकालादेव भारतेऽस्मिन् दर्शनमिदं गुरुशिष्यपरम्परया श्रोत्रविधेयीकृतं प्रथीयतेतमाम्। देवभूरियं म्लेच्छैरुद्विज्यमाना सती दशावतारेणापत्पयोधिमग्ना संतारिता। वेदानुद्धर्तुं केशवेन प्रलय-पयोधिजले मीनशरीरमेवाहितम्। स एव पुनरपि कच्छपरूपमाधाय विपुलतरे स्वपृष्ठे क्षितिं बभार। नृसिंहरूपश्च सः हिरण्यकशिपुं विदार्य प्रह्लादं ररक्ष। त्रेतायुगे च त्रातुरभावे विदुष्यपि सति दशमुखे राक्षसे विपरीतबुद्धौ 'त्राहि त्राहि' कुर्वन्तीषु प्रजासु रामशरीरी केशवः जगदुद्धार। द्वापरे च देवदानव भूतानां पाण्डवकौरवाणाम्

विद्रोहरोहे देवैः ध्रियमाणा धरा धृता धर्मधृता तेनैव पुरुषोत्तमेन। कलिकाले च कलिरेव कलाकृत् क्लेशैकक्रोडो क्रौर्यक्रीडाकृत एव क्रोडीकृत्य क्रियाः विक्रियाः विधाय धर्माधर्मभावैक्यं दधानः धरां धर्षयामास। धराधारणाय च धृतिमान्धीरश्च कोऽपि वीरः वैरिविभावसुविद्राणवेशी विश्वम्भराभृदवतारतारी म्लेच्छनिवहनिर्वाहे च करवालकरालकर्मी धूमकेतुकेती कल्किकायकृत् कष्टावस्थासु काले काले क्लेशनाशको बभूव। एकच्छत्रराज्यप्रत्यावर्त्तनाय च चाणक्यश्चन्द्रगुप्तं चन्द्रमिव कृष्णविभावरीषु म्लायमानमवलोक्य सूर्यप्रतिमः सन् स्वयं तेजः प्रसरप्रसृतः तेजोविप्रुषो विनिवर्त्य शुक्लपक्षपरिवृढीकृत्य पर्वणिपर्वणि परिभावयाञ्चकार। यवनाक्रान्तेश्च राहुजिह्वाया इव घस्मरणात्परित्रातवान्। द्विरश्वमेधयाजी च शौङ्गः पुष्यमित्रः सेनापतित्वे स्थितोऽपि पलङ्कटं बृहद्रथं मौर्यवंशदूषणं पृतनापरीक्षायामेव पेषयित्वा पलंकषप्रायपुरुष पेशलात् परप्रधर्षणात् पृथ्वीं परिरक्ष्य परिरक्षको बभूव। पश्चाच्च पुरुषपुराधितिष्ठता कुषाणसम्राजा कनिष्केण कालकालादुत्तार्य धराधूः धौरेयधुर्यधृता कृता। सुगुप्तिगुप्तैश्च गुप्तवंश्यैः सम्राड्भिः म्लेच्छैरुद्वेज्यमाना भूः परम्परावाप्तोपधाभिः स्थैर्यमानीय शतकत्रयमब्दानां राज्यैकपरम्परायां प्रोता स्यूता च। चन्द्रगुप्तो द्वितीयोऽपि सम्राड्विक्रमादित्यपदवीमवाप्य सप्तपञ्चाशत्कीयखीष्टीयपूर्वीये वर्षे मालवानां गणस्थित्या युगान्तरेऽमरत्वमाप्तः विक्रमसंवद्भाग्बभूव तेनैव प्रशास्त्रा सिन्धोः सप्तमुखानि तीर्त्वासमरे बाह्लिकाः निर्जिताःतेनैव स्वभुजार्जितं चैकाधिराज्यं क्षितौ व्याप्य विष्णु पदे गिरौ विष्णुध्वजः स्थापितः स्तम्भरूपश्च यो ढिल्लीनगरे मेहरौलीस्थले समुच्छ्रितो वर्त्तते। स एव सम्राट् कुन्तलानामधिष्ठाता प्रभावतीगुप्तां वाकाटकाम् स्वपुत्रीं मृतभर्तृका मवलोक्य कुन्तलेश्वरदौत्यभृतं कालिदासमल्पवयस्कयोः सतोः दामोदरसेन दिवाकरसेनयोः तस्याः सभायां प्राहिणोत् कुमारयोश्चैकः प्रवरसेनद्वितीयरूपः सेतुबन्धकाव्यकृत् कालिदासेनैवसाह्यदानाय परिकीर्तितः। कुमारगुप्तश्च कुमारकार्त्तिकेय इवापरः चन्द्रमौलेश्च चन्द्रगुप्तस्य सूतिः तस्यैवात्मनः प्रतीकः निजमात्मानं प्रसूयस्कन्दगुप्तरूपे स्कन्दाभिधेये कुमारेधृतधराधुरीणः हूणान् दानवानिव यमसदनं निनाय। पुष्पभूतिवंश्यनरवर्द्धनराज्यवर्द्धनादित्य - वर्द्धनानुगतश्च प्रभाकरवर्द्धनः हूणैणमृगादनः सिन्धुराजज्वरः गुर्जरनिद्रामोषी गान्धारराजगन्धगजगण्डरोगः लाटलौल्यलुण्टाकः मालवराज-राज्यश्री बल्लीकर्त्तनकुठारः

प्रतापशीलापरनामा राज्यवर्द्धनहर्षवर्द्धनजनयिता राज्यश्रीरूप राज्य श्रीसुता सौभाग्यवर्द्धनः कान्यकुब्जकुमारं मौखरिसम्राडवन्तिवर्मणः सुतम् ग्रहवर्माणं प्राप्य जामातरं एकच्छत्रराज्यां क्षितिं हस्तगतां चकार। परं भाग्यानामुच्चावचभावप्रभावात् राज्यवर्द्धनः अचिराधिष्ठितराज्यः सन् प्रकृतिष्वरूढमूलत्वात् गौडाधिपेन शशाङ्केन स्वनामधेय वैपरीत्यभावाद्राहुणेव ग्रस्तः शशाङ्क इव विलयं जगाम। ग्रहवर्मा च मौखरिः तथैव सुषुप्सुः राजनीतिव्यवहारेषु गुप्तारातिना देवगुप्तेन मालवराजेनावस्कद्य विक्रान्तोऽपि सन् षाड्गुण्यविरक्तः प्राणैः वियोजितः। हर्षश्च दूनश्चेतसि भावुक्यावेशविष्टः सन्नपि पितुर्मरणोपरान्तं मातुरनुमरणध्वस्तसत्त्वो भ्रातुरावुत्तस्य च वधद्वयमवलोक्य विगतसाहसोऽपि साहसिक साहसोत्सादन कृतोत्साहशक्तिः प्रभुमन्त्रशक्तिभ्यां स्वसत्त्वमुपाश्रितः गौडाधमं मालवराजं च समं करवालकृत्तकन्धरौ कृत्वा राज्यश्रियं विन्ध्यवनात् श्रमणाचार्यदिवाकरमित्रसाह्यात् अनुमरणात् समय एव परित्राय्य विन्ध्याटव्यामेव ताम् बौद्धागमगम्य व्यवहारां सम्पाद्य स्वं च सौगते मतेऽऽस्थां विधाय स्थाण्वीश्वर कान्यकुब्जाधीशत्वं लेभे। चालुक्यसम्राट्पुलकेशिना द्वितीयेन च पराजितः कमपि प्रदेशं राज्यात् मुक्तवान्।

एवं सति भरतभुव इतिहासे विग्रहद्वैधीभावविभवो बभूव व्याप्तः परस्परं कलहायमानाश्च नृपतयः नृणां पतित्वमपहाय नृशंसपतित्वप्रियेभ्यः श्वापदेभ्यः स्थलं प्रदाय मात्स्यन्यायनिष्ठापराः बभूवुः। गुर्जरप्रतिहाराः राजपुत्राश्च रामप्रतिहारलक्ष्मणलब्धजन्मानः स्वाधिपत्यम् राजस्थानाभीरायणादिषु प्रदेशेषु जानपदेषु च प्रस्थापयाञ्चक्रुः। दक्षिणस्यां च दिशि पालाश्चोलाश्च प्रविभासमानाः राजपुत्रायणं बृहत्कायराज्यमेकच्छत्रायत्तीचक्रुः। दैवदुर्विपाकाच्च परस्परं कलहायमानास्ते जयचन्द्र पृथ्वीराजप्रभृतयः संग्रामसिंह-प्रतापसिंहप्रभृतयश्च राजप्रमुखाः अन्तरङ्गद्वैधीभावभग्नदेहाः वीर्योदग्रगर्विताः एकैकशोऽप्रतिरथाः सन्तोऽपि संघाभावात् सशक्ता अपि पुरुषार्थहीनाः निर्भीका अपि द्रोहि भेदभिन्नाः सदण्डचक्रा अपि सोद्दण्डचक्रिलाः साग्निबाणा अपि विषाग्निभाणभग्नाः दुर्दान्तदण्डधृद्भिः शस्त्रास्त्रप्रयोगकुशलैः संघैकधुर्यैः विग्रहग्राहगुपिलैः क्रव्यघस्मरैः क्रव्यादैः क्रौर्यैककर्मभिः शौर्यैकधर्मभिः विघ्नैः पुनः पुनरपि प्रतिहन्यमानैः धैर्यैकसारैः पशुमारं मारणशीलैः श्वापदैरिवालर्कैः व्यात्तदंष्ट्रालैः मुखैः ग्रासीकृताः

युगान्तरेषु युगनिधनकल्पं कल्पमाधाय शिवनिभान् युगत्राणविधित्सूनेवसमपेक्षयन्। परं परम्परानुगता च सा सभ्यता भारतीया युगे युगे योगनिष्ठत्वमाप्ता सांख्येन संख्यानशीला सत्कर्मपरिणामपेशला दुष्कर्मदुर्भावविश्वासिनी चरमे धर्मसापेक्षित्वात् साधुजनत्राणपरा दुष्कृद्विनाशविधिविधायिनी—

**नष्टाः विधेर्विकारात् ते यूनानमिश्ररोमकाः ।**
**सद्धर्मरागरञ्जिम्ना भूर्भारती तु रक्षिता ॥ ३३ ॥**

इति दर्शनदिग्दर्शनदक्षा विकटविध्वंसदोहे सङ्कटदुर्दैवरोहे स्वाभिमानसत्यापनार्हा प्राणात्ययेऽपि प्राणपणनपुण्या वीरग्रामाग्रणिग्रासेऽपि वीर्योदग्र्यध्यानशीला धौरेयधामदाहेऽपि यौधेययागयुक्ता यातनायातुधानधृतापि शातनाश्रान्तश्रुत्या म्लेच्छमारणमध्यमस्वरोत्थामार्जनेवाम्लेच्छिता मूर्च्छामूर्च्छनामुक्तमोहत्वात् मुद्गरमृद्यमानमानवमुखमानमानितापि दानवदुःखदानधर्मिणी वृश्चिकैर्वृश्चितापि विषवृक्षवल्लीका वंशावलिविलयलूनापि वंशवल्लरीप्रासाद्यानेकशस्त्रास्त्रसामग्रीसामजसमाज सामञ्जस्या मानहिंस्रैरपि दुर्मनायमाना शमप्रधाना दुर्दान्तधूर्त्तैरपि घर्ष्यमाणा धैर्यधना क्रौर्यैकक्रूरैराकृष्यमाणा सदाक्षिण्या कदनकेतनकिङ्करैराकूताऽकिङ्कर्त्तव्यविमूढा सद्भावसौरम्यसुरम्या सच्चरितसौधसुधाकरा, दुश्चरित दोषदवानला, सुधीसद्भावसुखावहा दुर्धीदुर्भावदुःखाकरा नकालकवलनाढ्यं कलिं कुत्सितकर्मशर्मणे शौर्यसम्पत्प्रसारणं प्रवणमन्वजानात्। अनन्यजातांश्च जातकान् जनयित्वा जन्यजन्मजिघांसया जन्मनि जन्मनि जिजीविषतो जनानुदजीवयत्।

तस्यां भुवि प्रकृतिक्रोडप्रक्रीडच्चिक्रोडाक्रोश विक्रोशव्याप्तवृक्षवीथिविन्यासविशदायां प्राकृतवनितेव प्रकृतिवनितावेषाकारा नववयोविरावगीतमाधुरी मुखरश्रृङ्गारा पुष्पप्रकरपरिकरश्रृङ्गारा भृङ्गारावभरितपद्मकोशविकोशविशालचक्षुषी द्रुमदलदीर्घालकप्रतानासु सरित्तरलतरङ्गावर्त्तनाभिचक्रा, हंसश्रेणिक्वणितरशनागुणा वियच्चन्द्रोपकचञ्चच्चन्द्रतारकतारकितविचकिलविकासविलासलसल्ललामुखराग - रञ्जितगैरिकगिरिगह्वरगुञ्जन्निर्झरझाङ्कारमिश्रझिल्लिकानादनिनदितहरनादशिञ्जितनादेयवारिपरीवाहपरिवारप्रियपतिवरा, असिताब्दमुक्ताम्बुविसरसुधारस सरसशस्य शाकश्यामलशरीराकारा, उशदुषस्यवधूविस्मयस्मितस्मेरवदनारविन्दविकासविहितवेशपरिवेषा कलित-

दिवाकरवरकरा केसरकुड्मलकोशकेश संस्कारसम्भारा, शर्वरीशबरी-संवाहिकासंवाहनकर्मप्रसाधना चन्द्रार्चिचञ्चच्चत्वरचारु - हासिनी निशान्तसुखसुप्तोत्थितकूजत्क्लान्तकपोतकुक्कुटकुलकुलायाकुलचैत्या - रामदेवकुला, साभिसाराभिसरणसौष्ठवापादनप्रतिपत्तिपेशला प्रति-पच्चन्द्रतारकोल्मुकगणगुणहार हराभिसारिका, निर्झरनीरनीहारासार-सरित्स्रोत: स्रावपरिसारविहारहृद्धारिणी हरिणीव हरितशाद्वलप्रचारा राजपुरी नाम नगरी ।

नगनदनीराराववरौद्रदरीद्वारदोहलेयं पुरोत्तरस्यां दिशि पीर-पञ्जालपाशिता पाश्चात्यभूधरधरायां च पुञ्छ कोढयोनप्रदेश पेशला दक्षिणस्यां च भिम्बरभारिणी पौरस्त्यभूधरधराशायि - चन्द्रभागा-सरित्स्रोतसी अकृष्टपच्यसस्यसम्पत्सारणी अधृष्यदोर्दण्डधार्यैकवारणी वारुणीगण्डूषसेक सुकुमारकुमार कौमारभृत्या विश्वम्भरविश्वम्भरा-भरभूभृद्भवभावनीना पिककुलकलरवारावितसिताशा चञ्चरीकचारण चरणचारचारिचमत्कृतारण्योद्यानपालीका मधुकाल कलिकाकोर-किताधर रागपरागपीतासवमत्तमधुपपरभृतप्रोत रतिराग गौरवा उल्लिखितमनोभव मन्त्रमुग्धमृगमदाङ्कवासितदृषद्दरीणा, मलय मारुतमन्दचारचारितरुणतरुततितीर्णकरि - कोकिलकलकला, शष्य-श्यामपटावगुण्ठिताद्रिदेशा साक्षादृतुराजाकारेव रङ्गत्तरङ्गरङ्गिणीत-रङ्गिणीतोय शृङ्गारदर्शिनी कमलिनीकमल कुवलयकह्लारकुलगन्ध रसलुब्धालिवृन्दविहारवर्त्तनी प्रसूनगुल्मलक्ष्मी क्रोडलालितरसालद्रुमा-मोदसामोदा तरुणतरुणीतर - स्विनीनिम्नगा - करेङ्गिताकारधर्मिणी 'वीरसूरिति' विख्याता वीरं सुतमेव सुषुवे क्षुद्रक्षाणकुले रामदेवगृहे भारद्वाजगोत्रीय राजपुत्रप्रवरीये लक्ष्मणदेवप्रख्यं देवलक्ष्माणम् जनानां दासित्वाल्लक्ष्मणदासापरनामानम् । रामानुजलक्ष्मण इव सल्लक्ष्म-भृल्लक्षणविद्रामदेवात्मजोऽयम् लक्ष्मणदेवो देव इवापर: सद्धर्म कर्मानुयायी लक्ष्यलक्षणविज्ञ: दारिद्र्यदोषैकभागी तेज: पुञ्जप्रतापी प्रक्रिया पाशपुष्ट: विक्रियाभारभ्रष्टोऽपि सत्क्रिया भावजुष्ट: बाल्ये विद्याव्यवहारलम्पटोऽपि तदुपायाभावप्रभावात् विद्वान्नैवाभूत् । पर-मुपायरहिता: अप्यपायविहता: सन्तोऽपि स्वभावप्रतिपत्तिप्रकृष्टत्वात् भगवद्दायोपात्तदायित्वा: दवीयोदेशाद्रिदरीदृषद्राशिप्राकारपरिकरिता अपि स्फूर्तिस्फुरत्तारक स्फुलिंगा इव वह्निवृष्टिमन्त: प्रदीपाकारा: जगद्द्यापि विद्रोहद्रोहसंविष्टाशिविषविसर्पान् स्वधैर्योत्साहमूल

मन्त्रौषधिप्रभावैः प्रोद्भाव्य निष्प्रत्यूहं निष्प्रभावानाकलयितुं सुप्रच्छन्नमपि रूपम् प्रत्यक्षं कुर्वन्ति। प्रत्यक्षीभूताश्च ते परोक्षानपि भावान् स्वदिव्यचक्षुषा चेतयन्तः निश्चेतनेष्वपि चेतनां चारयन्तः प्रकृतेर्विकृतिवर्धकान् वृत्रानिव वृत्रघ्नाः बृहत्कायाजगरानिव व्याधाः सद्वृत्तिव्याप्ति बाधकान् विषयान् मार्गकण्टकानुन्मूल्य संशोध्य वा वपुर्विकारकविद्रधिदद्रूनिव दारयन्तः दृष्टनष्टा इव तरलपदार्थाः तरङ्गबुद्बुदावर्त्तवृतिवर्तुलाः निमित्तभेदैः भिन्नाः निमित्तानीव निम्नोन्नतविनतिपरिणति प्रवणाः प्रकामत एव भङ्गिभावभङ्गुराः भीविकारविद्विष्टाः धीसंस्कारसंयुताः अनाशिन्यप्रमेयेऽऽगमापायिन्यात्मन्येव स्थैर्यबुद्धिं दधानाः विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः धैर्यैकधनाः कूलंकषसरित्प्रवाहानिवोपद्रवकारिणः धर्षयन्तः कायम् कल्यवर्त्तं कलयन्तः दुरन्तपूरामुदरदरीम् दृप्तारिरक्तपानपिपासयैव पूरयन्तः प्राणपणेनापि पणितमत्यजन्तः प्राणाहुतीः विद्विड्विद्रोहरोहदाहविभावसौ विधित्सन्ते। धर्मनाशे सम्भवति अधर्मप्रादुर्भावे च साधुजन परित्राणपरास्तेदुष्कृतां विनाशायैव कल्पन्ते।

प्रथितमिदं तत्त्वं यद्भारतभुवि सौमनस्याभावात् वैमनस्यप्रकोपाच्च परस्परकलहायमानेषु राजसु राजपुत्रेषु सामन्तेषु च दुर्दैवदुर्विपाकात् मोहम्मदाः सामयिकशस्त्रास्त्रप्रयोगकुशलाः स्वधर्म संरक्षणमात्रव्यापाराः मतैक्यजुष्टाः सौहार्दपुष्टाः संघसंचारिणोऽनर्थाः इव छिद्रेष्वात्तव्यवहाराः मर्मसु स्फोटयन्तः सन्धेरभावाद्विग्रहमाश्रयन्तः प्रहारेषु प्रहृताः यानमादधानाः आसनावस्थासु च द्वैधीभावमुत्तानयन्तः विजयिनो भूताः देशस्य प्रशास्तारोऽभवन्। मंगोलदेश्याः मुगलाः बर्बर बाबरात्प्रारभ्य शासनम् हुमायूं-अकबर जहांगीरशाहजहानादिसम्राजां पौर्वापर्यं परिलभ्यावरङ्गजीवशासनं धर्मसव्यपेक्षित्वप्रकोपदुर्धरमदुः। स्वधर्मसव्यपेक्षी बाबरः स्वसाम्राज्यप्रतिष्ठापनाकाङ्क्षी बर्बरवृत्तिमापद्य भारतीयसम्राजां राणासंग्रामसिंहादिप्रमुखराजपुत्राणां प्रहारैःप्रहृतोऽन्ततो विजयं प्राप। पित्रोपात्ते राज्ये पराभवदलितासु प्रजासु हुमायुंसम्राट् सुखेन प्रशशास। शेरशाहनाम्ना केनापि सामन्तेन परास्तः सन् सः राज्यात् च्यावितः। शेरशाहश्च प्रजाहितार्थी प्रजानाम् पूर्णतया परिरक्षको बभूव राजमार्गोद्यानातुरालयप्रपाकूपप्रकारान् प्रजासुखापादकान् विपयान् विनिर्माप्य प्रजानां प्रेयस्त्वमापत्। परं हुमायुः पुनरपि तं पराजय्य प्रशास्ताऽभूत्। तदायतिश्चाकबरो

भारतधर्मसव्यपेक्षी हिन्दुभावसद्वृत्तः स्वसभायां बीरबलतानसेनादीन् प्रमुख कलाविदो निधाय राजपुत्रसम्राड्भिः सम्बद्धश्च सन् देशैक्या-च्चक्रवर्तित्वमापन्नः सुवर्णयुगस्याविर्भावमापादयत्। परम् जहांगीर शाहजहानयोः शासने अकबरोपात्ततत्त्वानां ह्रासोऽजायत। शाहजहान सुतजयकलहेऽवरङ्गजीव विजयो वंशविनाशवृत्तिवर्धक एवाभवत्। तस्मिन् शासितरिसति इस्लामवादप्रभावपरिभावपरिभूताः प्रजाः स्वधर्मं धर्षणधर्षिताः जातिसम्मर्दमर्दिताः 'त्राहि त्राहि' इत्युच्चैरुच्चु-क्रुशुः। यस्मिंश्च राजनि प्रतर्कितेस्लामविस्तार प्रसारभावे वसुमतीं प्रशासति साधूनां पीड़नं नेक्षूणां अविद्विषां दिव्यग्रहणं न वयसाम्, पदे पदे विग्रहो न चैव सन्धिः, स्त्रीणां गलग्रहो न तिमीनाम्, बहुलासु रात्रीषु पादाकृष्टयो न गूढचतुर्थकानाम्, सुकविकाव्यविस्तरेषु क्षति-भावदर्शनम् न कुकविभावदर्शनेषु, विद्रधीनां वृद्धिर्नोदग्रधीमताम्, सुविपुलयशसां तर्जनताडनानि निधुवनक्रीडासु भर्त्सन मारणानि, द्विजातिहिंसासु शाखोद्धरणम्, धीमताम् लाभेऽसद्व्यवहारप्रवर्त्तक-त्वम् न श्रीमताम्, सद्वृत्तिव्यवहारदक्षमानवेषु दानवत्वम्, धर्मशर्मगवेषकेषु बन्धव्यधमारणानि, अनक्ष जिताम् निर्दोषित्वम्, साधुत्वेऽन्यायदर्शनम् अवैदुष्ये संख्यानभावः, रागित्वे योगप्रयोगः, वैशिके वैशेषिकमतम्, अद्रव्यत्वे द्रव्यत्वभावः, अब्रह्मण्ये ब्राह्मणत्वम्, विरोधे सांमनस्यम्, म्लेच्छधर्मसव्यलीकत्वे निर्व्यलीकत्वम्, ब्रह्मचर्ये भ्रमचारित्वम्, गार्हस्थ्ये परदारापहरणम्, वनोषिते वन्यौषधिशातनम्, सन्न्यासे च सन्न्यासनाशनम्, अनाहारेऽपि निराहारित्वम्, धरा-शयितेऽपि प्रभावित्वम्, समागमेऽपगामित्वम्, प्रणतावप्यप्राणित्वम्, संस्तवेऽप्यपमानित्वम्, धैर्येऽपि दोषित्वम्, शौर्येऽप्यपराधित्वम्, क्रौर्ये सद्भावित्वम्, चौर्ये सम्मानित्वम्, वैरे विश्वासित्वम्, दर्पे सौहार्दम्, दम्भेसौभाग्यम्, शमे भीरुत्वम्, दमेधार्ष्टयम्, दाने दीनत्वम्, कलाकौशलेऽपव्ययित्वम्, संगीतशास्त्रप्रयोगेऽपराधित्वम्, सद्गीतगाने जघन्यत्वम्, श्रुति श्रवणे कारागारित्वम्, स्मृतिसरणेर्विस्मारित्वम्, विद्वज्जनापकारित्वम्, सहृदयहृदयहारित्वम्, सौभाग्यसौहित्य हेतित्वम्, भारतीयानामभून्न मौहम्मदानाम्।

यश्च क्रौर्यक्रियालुर्दर्पमात्सर्यभूयिष्ठो न्यूनपक्षीयाणामवनत्या तुतोष न प्रसत्त्या, निजधर्मध्यानव्यसनीं जनानामर्दितयाऽप्रीयत न कृतज्ञतया, दुरात्मीयबुद्धिः कार्याणां हिंसनेन जहर्ष न सम्पादनेन, लक्ष्मीलालन-

लम्पटो दैवस्य दौर्दम्यत्वे दूनचेतोऽभूच्छूनशरीरश्च शातनशतशम्यो नैव। संगर श्रीसंविभागशौण्डश्चस्तेनदस्युप्रियोऽभून्न तु सौहार्द सौहित्य-प्रेप्सुः सौभाग्यजुष्टः धैर्यव्यक्तिकामो व्यसनेषु मनः आससञ्ज व्यसन-युक्तमनसां मोक्षे तु नैव। अविनयबाहुल्यदर्शी विनतानाम् मूर्ध्नश्चकर्त अभद्रसारवर्षीमूढानां मतिं प्रशशंस, अलब्धलाभार्थी चापि लब्धप्रणाशी, अरक्षितलब्धश्च विवृद्धिद्वेषी, विवृद्धिमुक्तश्च तीर्थप्रतिपादनपरवशः परमर्मस्फोटनपरः परधर्मत्रोटनतितिक्षुः स्वमतावलम्बिलिप्सुः परमत-भेदनभिक्षुः, भैरवाकारो भीभृताम्, शौर्याचार्यः श्रीमुषाम्, धैर्याधारो धीमुषाम्, मृत्युरिवापरो मनोमुदाम्, मृगयुरिवेन्द्रियमृगाणाम्, हृद्यपि हर्षं नोवाह विहितविविधविधोपधाधृद्धतिवृत्तिवृत्तेभ्यः।

यस्य च प्रतीपभाव एव प्रतापो विद्वेष एव विलासः परपरिताप एव परिहासः विभवनाश एव प्रकाशः विद्वद्ध्रास एव विनोदः दुरोदरधौर्त्यमेव विनयः कुराणकर्मैव कृत्यम् पुराणमर्मैव भेद्यम्; किं बहुना, बाल्य एव सोऽतीवोद्दण्डो ज्येष्ठभ्रातृकदनेन पितृबन्धनेन च बद्धपरिकरो गृहकलहे, कलिकाल इवाकीर्तिमान् बलिरिव बलीयान्, अधर्म इव द्रढीयान् अबलानामपकर्षणे रेमे न परिरक्षणे सतीनां सन्तापे सन्तुतोष विलापेऽविह्वलो बभूव। असतां सन्तोषे सञ्जहर्ष न विलोपे। सतां सम्मोहने समतृप्यत् न संज्ञापने। विशां वेशपरिवेषे विह्वलोऽभून्न परिमोषे। ब्राह्मणानां भर्मभोगे भर्तृत्वमवाप क्षत्रियाणां क्षतात्त्राणपरत्वे मात्सर्यमुवाह शूनासुदारणपरांश्च शूद्रानेव शून्योदरान् विधायानुदारधीः शुल्कदानैः दायविभागैश्च दुर्दैवदुर्विपाकात् कौराण-परिपाट्या परिवर्त्य पराभवनिरीहान् परिभवनिष्प्रत्यूहांश्च भावयित्वा भृत्यभूतान् भृतिभरान् भारयित्वा भुवि भारतीयताकलङ्ककूटान् कृत्वा पदोन्नतिभिः प्रलोभ्य परिवारैरेव सम्भार्य स्वसम्बन्धिसौभाग्य सौधमधरी चकार।

आततायिनोऽस्य हेतिततितष्टतालवोऽनेकेयुवानः सौन्दर्यप्रतिमाः बालाः प्रवरवयोवृद्धाः वृद्धाश्च इस्लामतावलम्बालिप्सुकाः पञ्चत्वम-वापुः। पञ्चतत्त्वतिरोहिताश्च तिरस्कारतीक्ष्णदाहदग्धाश्च तेऽसृक्-प्रवाहपूरैः स्वजन्मभुवो भक्तिमत्त्वमगमन्। परासवोऽप्यनपास्तासवस्ते युगपरिवर्त्तपरमाणव इव परमर्मघट्टनकुशलान् कृशानुस्फुल्लिगानेव स्फारयामासुः। साक्षादस्य देशस्य शिवस्पृहः संसारसम्भवस्थिति-

संहार हेतुभूतः मदनदहनोऽप्यमदनदहनः विषमलोचनोऽप्यविषमलोचनः विश्वम्भरोऽप्यविश्वम्भरः विभुरप्यविभुः पृश्निरपि प्रांशुः विष्णुरप्यविष्णुः अंशावतार इव वामनस्य त्रिविक्रमः शक्तिसिद्धित्रयेण, षाड्गुण्योपयोगभोगी, सामप्रधानोऽपि दण्डप्रधानः दण्डप्रमाणोऽपि भेदप्रमाणः सान्त्वापकृदप्यसन्त्वापकृन्नु पुण्यैर्जनानामपुण्यजनाभिमानी पुण्यकृतां पौर्वापर्यप्रणेता, म्लेच्छगोमायुकेसरी महाराष्ट्रवीरः शिव इव जगतां राजा शिवराजो बभूव ।

यश्च संगरश्रद्धालुः यवनाधमाधरीकृतपौरुषाणां भारतीयानां जनजीवनसमाजसौमनस्यभावापादनबद्धपरिकरः स्वल्पसैन्यसनाथोऽपि कौटिल्यकूटकुटिलः प्रवदवतोर्निलीयाद्रयाखुविशेषणदूषितोऽपि महाराष्ट्रसिंहः स्वनादैः खड्गशक्तिभुशुण्डिभारभरितैः सैनिकैः तापसव्यञ्जनैश्च प्रणिधिभिः गूढसञ्चारव्यवहारपेशलः तीक्ष्णाग्निरसदांश्चाद्रिदरीषु गोपायित्वाऽवरङ्गजीवसाह्यदमपजलखानं विजयपुराधीशं पण्डितगोपीनाथद्रोहविद्रोहशून्यचेतसं स्वकर्त्तर्यैव परस्परसमागमकाले संजघान । तथैव च यवनाधमदानववृत्तिवृद्धांश्चानेकान् नरकपालान् वनिताविदूषकान् नरकपालघस्मरान् भल्लूकानिव भल्लशतैः शातयित्वा यवन श्रीमोषणमकरोत् ।

नानकगुरोर्गौरवगानगुप्ता च भरतर्षभाणां श्रीः म्लेच्छदानववृत्तिदाहप्लोषशेषारुणिता सती अङ्गदामरदासार्जुन हरगोविन्दहरराय-हरकृष्णतेग़बहादुरप्रख्यान् स्वसुतान् चतुरुत्तरपञ्चदशशततमात्खीष्टाब्दादारभ्य पञ्चसप्तत्युत्तरषोडशशततमाब्दपर्यन्तम् गाढसंघर्षघृष्टान् स्वाशीर्भिः वर्धापयित्वा धर्मपरिवर्तनक्रौर्यशौर्यविद्रोहरोहे प्राचोदयत् । पञ्चापपुण्ये प्रथिते प्रदेशे परम्परायाम् गुरुनानकस्य नवमो गुरुर्गौरवगानगुप्तः श्रीतेग़बहादुराख्यः नवमः स्फुलिङ्ग इव तेजोराशेः गुणैरनूनो विश्वजनीनरूपो रौद्राकारोऽजगर इव दानवदवदावदंदह्यमानो विरूपाक्ष इव विरूपिताक्षः आर्यावर्त्तवास्तव्यः आर्यवृत्तिविशालः विशालवक्षाः वक्षस्यनार्यकारीणामनार्यकारिणामनार्यकार्यैः प्रहारावलेपान् तितिक्षमाणः दुर्दिनान्धकारपरिवारपरिम्लानतेजः प्रसर इव तरणिः तमोगुणगाढावलेपलिप्तलोहितास्रलोलुपान् ब्रह्मघ्नान् अघ्नीघ्नान् देवप्रतिकृतिभञ्जकान् यवनाधिराजराजाध्यक्षान् विलोक्य सिंहोरुसत्त्वः नृसिंह इवापरः नृमांसभक्षान् वेतालानिव नरकपालमुण्डमालालयेषु श्मशानप्रायवैशसस्थलेषु च विभाव्य करुणार्द्रचेताः

सुरम्यारामरमणरमणीय रमणीरामणीयरागाङ्गभूतचत्वररङ्गम् स्वमार्यदेशं दयमानः स्वजन्मभूमातरं चोदासीनां संविभाव्य यवनाधिराजविचारविरोधितत्त्वभूतसत्त्वसंहारसंकटविकटावस्थावसथं स्वं सोपालम्भमेव तिरस्कुर्वाण आत्मानं तस्याः निरीहं सुतं चाकलय्य लज्जमानः यवनाधमकरटिकटिकुत्सितकर्म च जुगुप्समानः एकमेव जातकं गोविन्दसिंहं जननीद्वयक्रोडक्रीडापरं खे जले च केलिं कुर्वाणं शशिनमिव जनयित्वा स्थानात्स्थानं भ्राम्यन् आनन्दपुरात् पुरात् स्वात् निश्चक्राम । निर्गतश्चासौ पाटलिपुत्रधामादिप्रदेशान् हिण्डमानः शिष्यवर्गाय स्वकर्त्तव्यं च शिक्षयन् यवनाधमस्य हिन्दूद्विषोऽवरङ्गजीवस्य विनाशाय बद्धपरिकरो गतः आग्राप्रदेशं भृत्यैर्यवनराजस्य राजापकार्यपराधदूषितः राजापायशङ्कया द्रागेव निगडितो दिल्लीपुरं निन्ये । नीतश्च क्रूरान्तरात्मना यवनाधिपेनावरङ्गजीवेन इस्लामधर्मदीक्षापरत्वाय प्रचोदितः प्रधर्षितो बाधितश्च यदा नामन्यत सः तद्धर्मदीक्षास्वीकृतिं तदा तस्यैव पुरस्तात् तस्य शिष्यो मतिदासनामाऽऽशीर्षपादं प्रविदार्य देहं दयालुसंज्ञोऽप्य दयालुकस्तैः ज्वलज्जलकटाहे प्रक्षिप्तोऽतिराक्षसं च तत्कर्म प्रत्यक्षं विलोक्यापि यदा स्वधर्मनिधनापेक्षी न मनागपि चचाल चेतसि भयावहमिस्लामधर्मं च न स्वीचकार तदा शिरः कर्त्तनमस्य निर्दिदेश नराधमः । नारिकेलसहितं पणपञ्चकं गोविन्दगौरवदीक्षाचिह्नं विकल्प्य शिष्यान् स्वसुतरक्षणाय विज्ञाप्य निजान्तकालमभिसमीक्षमाणः आनीय चान्दनिचौकनाम्नि विशालचत्वरे इष्टिपशुमारं मारणाय निर्णीतः वन्यैर्विहिंस्रश्वापदैरिव वधकैस्तत्र शिरःकर्त्तनाय कल्पितः वधकेनैकेन सर्वजनसमक्षमेव कबन्धान्निःशिरस्कः कृतः । शिरस्तदस्य कृपाणलूनः विचेष्टमाण एव कबन्धाद्यावदेवव्ययुज्यत तावदेव हाहाकारध्वनिरुज्जगाम सर्वशः । नराधमनारकीणनृशंसनानाराशंस्यं नैर्घृण्यनिष्ठं निरीहं नृत्यत्कबन्धक्रूरं कर्म तदीयं विभाव्य विधिनापि वेधोविकारमाकलय्य जगतामपुण्यैरेव पुण्यकृतोऽस्यापुण्यभावत्वमापन्नमिति विश्वासो व्याप्तिमापत् । तेगबहादुरस्य 'तेग़' तिग्मधाराधराशायितमुत्तमाङ्गमुत्तममाङ्गत्वमवाप रजोरूषितं सदपि द्युषदां शोकसौहार्दसंवेदनापरत्वात् । अथोच्यते हि पुंसामपुण्यैः पुण्यैर्वा दुर्भाग्यसौभाग्यसम्पत्संविधीयते । अत एव पुण्यभाजां केषां शताब्दचतुष्टये वेदविद्याविनाशविनष्टचेतसामनिष्टारिष्टरोषदोषत्वाद्यज्ञहोमाहुतिहुताः इष्टिपशुमारं मारिताः आबालवृद्धं स्त्रीपुरुषाः परं धर्मग्लानावधर्मभ्युत्थानावस्थायां धर्मस्य पुनरुज्जीव-

नाय महात्मनाऽनेन तेगबहादुरेण स्वप्राणाहुतिदानेन स्वदेशिभ्यो नव एव पन्था: दृग्गोचरीकारित:। कृत्तमात्र एव शिरसि वपुरस्य विचेष्टमाणं यवनाधमसंत्रासात् न केनापि संस्कारविधेयीकरणायोत्थापितं विधेश्च विलासात् प्रकृत्यापि शोकसंवेदनमाख्यातुं रोषाविर्भूतये भीमरूपस्य वात्याप्रकोपस्यावेश आविष्कृत:। दिक्षु च वेतालताल-तरलायमाना: विरेसु: विदीर्णकलकण्ठनादा: शिवा:। प्रतिभवनं चाट्टालकोपेता: करुणं चुक्रुशु: ध्वांक्षा:। मनस्विमनुजमरणत्रासत्रुटिताश्च व्यकिरन् विहायसि विहगगणविहारपरिहारकृतस्तारागणा:। पार्श्वस्थपादपैरपि प्रियजनपरिभवनिराशै: पत्रमिषेणास्राणि मुक्तानि। विहरद्भिर्विचरद्भिश्च गवादिभिरपि स्वरोमन्थमोचं समवेदनत्वं प्रख्यातम्। अनित्यस्य शरीरस्य शरीरिणा शिरोलोपमवाप्यानवाप्यं यश: एवावाप्तम्। रजोऽवकीर्णं वपुर्हि तत् जनगणविक्रोशदीर्यमाण-गलगह्वरसमेतं बीभत्सदर्शनमपि सत् श्रीभद्रवर्षकमेव जातम्। नियम-निष्ठत्वनिरतो हि नाऽन्यूनसत्त्व: सत्त्वातिरेकात् सत्त्वासत्त्वनिरपेक्षित्वात्सत्वसत्यसव्यपेक्षी सद्धर्मसमुत्थानशील: सतां सुहृदसतां च दुर्हृद् दुर्जनदुर्नयानायवडिशवागुराबद्ध इव शफर: शोच्योऽशेत्। शयान: शरीरेणोत्थानशीलश्च शर्मणि धर्षितोऽपि प्रकर्षित: संलुप्तोऽपि विलिप्तकीर्ति: संपिष्टोऽप्यक्षुद्रारिणा बलीयसा बलिनाऽबलीकृत: सबलीकृत: स्वदेशिभि: सोत्साहकृन्निराशिषां निरहङ्कारकृत्कोऽपि कर्मीकृतपुण्यकर्मेव मनस्वान् जेतृनामासुजन एव स्वजनान् सुहृज्जनांश्च विहाय प्राणान् पणीकृत्य परैरलक्ष्य इव गुरोरस्य शीर्षं कराभ्यामाकलय्य विद्रुत: प्रापत्पुरं स्वानन्दपुरप्रख्यम्। लुवाणवंश्यश्च पणिनां वरेण्य: कोऽपि करुणार्द्रचेता: कबन्धमस्य शकटेन निर्वाह्य सपद्येव कार्पासकर्पटपिहितं चकार। राजकोपपरिहारार्थी च स: अन्त्येष्टि-क्रियाभिलाषी स्वगृहमेवाग्निसात्कृतवान्।

साग्निकृते गुरुशरीरसहिते स्वेगृहे जेतृनामा शिष्यस्तस्य शीर्षमिदं कराभ्यां संगृह्यास्य पुत्रं गोविन्दसिंहं समदर्शयत्। पितृशिर: कृत्तमवलोक्यापि स मनागपि न चचाल चेतसि वाष्पबिन्दुमपि न मुमोच धीर:। धैर्यधनश्च साधुरसौ न किमपि दुष्करं कर्त्तुमारेभे। मोहपरीतो वा न भृगोरात्मानमपातयन्न चापि स्वमुद्बध्य व्यापादनपरो बभूव पितामहीं मातरं च सान्त्वप्रायैर्वचोभिराश्वासयन् शोकविह्वले ते प्रकृतिस्थे चकार। माताऽप्यस्यानु मरणक्लैव्यं परिजहे सिंहीव शावमुत्ते-

जयन्तौ मदमलिन कपोलभित्तिकरटिकरटप्रहारदानाय च प्रेरितवती। शीर्षं च पितुस्तेन वैदिकविधिनासंस्कृतं कृत्वोशीरदारुदाहविधेयिकृतम्। दशमेशभूतो दशमो गुरुरसौ शिष्यैः स्वैः गौरवमापादितः सब्रह्मक्षत्रविट्शूद्रवर्गान् समाशसम्भाषसम्मेलने सञ्जुहाव। नववर्षदेशीय एव पितुः प्राणसंहारे साहसी सः विद्वान् नाहन्नरेशनगरीमागात् कालेकस्मिश्चिद्व्यतीतेसति। एकोनविंशे समतीते वर्षे वयसः सः वर्णाश्रमधर्मैकधर्मी भिख्या इति नाम्नीं कुमारीमुपायंस्त विंशे च वर्षेतथैव प्रेरितोमात्रा बन्धुजनेन च जीतो नाम्नीं कुमारीमपरामपि परिणिन्ये। अजितसिंह-जुझारसिंह - ज़ोरावरसिंह फ़तेहसिंहाख्यपुत्रचतुष्टयप्रसवसौम्या च भरतभूश्रीः वीरसूरिति वीरुदं पुनरप्यवाप। पुत्रचतुष्टयेऽजितसिंह जुझारसिंहौ इस्लामदीक्षां नकारयन्तावेवावरङ्गजीवपृतनापरीतौ परः-शतैः प्रहारैः प्रेत्य किल लभ्यानि फलान्यवापतुः। ज़ोरावरसिंह फ़तेह-सिंहौ च तथैव नकारयन्तौ नराधमविभीषिकाः प्रलोभ्यमानावपि च स्त्रीराज्यधनादिविसरविशेषदायप्रदानप्रायैः भित्तिभागनिर्माणपरीतौ जीवन्तावेवकृत्तशिरस्कौ पितर्यपि जीवत्येव मातृद्वयेऽपि च तथैव भवति निर्घृणजाल्मात्याचारजालजर्जरितौ जीर्णौ काये न तु लोकहृत्सु शीर्णौ व्यवसाये न तु मानभृत्सु युगयुगान्तरयशोगानगुरू बभूवतुः।

षट्षष्टयुत्तरषोडशशततमेऽब्दे गोविन्दरायेत्ति नाम्नो गोविन्दसिंहस्य जन्मजातमासीत्। लक्ष्मणदेवोऽपि सप्तत्युत्तरषोडशशततमेऽब्देऽक्टूबरमासे षोडशेऽह्नि जातोऽभूत्। नवमगुरोस्तेग़बहादुरस्य कदनकाले गोविन्दश्चे-न्नववर्षदेशीयोऽभूत् लक्ष्मणदेवः केवलं पञ्चवर्षदेशीय एव। कोऽजाना-द्यत्काश्मीरवास्तव्यो दरिद्रः पञ्चापदेशीयमहात्मना समागतः कदा-चिदितिहासे महत्तर एवात्मा भवितेति। विधेरेव विस्मयकरो विलासोऽयं यदसौ दवीयोदेशदुर्गतात् लोके नगण्यात् स्थलात् नेदीयोदेशमानीय मिथः सम्भाव्य च तथाविधसौहार्दं सौहित्ये संयोजयति यद्युगस्मरणी-यास्ते युगसंरक्षणपराः अवतारा इव प्रविभासमानाः मोहनिद्राविनि-द्रितान् विद्विड्विशिखविहृतान् विहगानिव विश्ववियद्विहरणाय प्राणापानव्यानोदानदानैः पुनरुज्जीवयन्त इव प्रखरांशुमन्तोदिवाकरा इव प्रतिदिनमुदीयमाना एव सन्ध्यास्वस्तायमाना अपि यशोदीप्ति दीपप्रकरपरिकरिता इव जगज्जीवनाय दानवदवदावाहुतिषु शलभायमाना अपि अमृतत्वाय प्रकल्पन्ते।

'दारिद्र्यदोषो मुणराशिनाशी' सदुक्तिरियं कर्णामृतत्वप्रायापि लक्ष्मणदेवे कर्णविषमिवाविषह्यप्रभावा अभवत्—यतः निरक्षरोऽप्यक्षर-रक्षणशौण्डः क्षेत्ररक्षणपटुः प्रियधान्यासारविसरः पितुर्व्यवसायसाह्यदान सल्लक्षणः शरचापधृन्मकरकेतन इव वपुष्मान् रतिरभसावेशविहृतान् विहङ्गमान जाविमेषमृग कपोतपोतान् प्रियतन्त्रीवाद्यव्याध इव वनेचरः बीराग्रणीबुभूषुः धृतबृहत्तर्वङ्कुरपल्लव इव स्निग्धवर्णः तेजस्तरस्वी वेधोवयस्वी एकलव्य इवापरः द्रोणाहङ्कारकर्षी प्रकृतिक्रोडाक्रीडी कलभ इव कलकलं कुर्वाणः मत्तगजमदादानपरः स्वभावादेव कण्ठीरवः कण्ठारावविरोधी व्यवहारे व्याहाराहारहर्षी हृष्यद्धय इव हरिच्छाद्व-लवल्गनशीलः शयुरिव शयानः शतशः श्वापद संहारकारी बाल्ये बली अबालबलशाली जगतामखिलानां विस्मयास्पदत्वमवाप ।

इति डा० सुदर्शनशर्मणां कृते वीरवैरागिचरिते

प्रथमः उच्छ्वासः ॥

# अथ द्वितीयः उच्छ्वासः

प्राणात्यये मानहृतिर्न सोढा
त्यागैकधर्मोन्मानधिया प्रवृत्ता ।
भार्या: भृता: कार्यरतिर्न लुप्ता
नष्टा: सुताः सौप्तिक सांपराये ।। १ ।।

धर्मार्थ काम मोक्षाणामारोग्यं मूलकारणम् । अर्थमूलो हि धर्मकामौ । मनुष्याणां वृत्तिरर्थः । मनुष्यवती च भूमिः सैव जननी जन्मभाविनी ततः परं सर्वं स्वार्थैकमूलं स्वार्थ एव सत्त्वसंबाध-साध्यम् । अत्यासेवितो हि धर्मोऽर्थकामाभ्यामसंगतः असत्संगत एव सदसन्निर्णयाभावात् मर्मघट्टनपरः स्यात् । अत्यासेवितश्चार्थः धर्म-कामाभ्यां विरहितः स्वार्थसाधक एव । पराभिसन्धान सम्पदो हि श्रियो भवन्तीत्यशङ्कनीयमेव । अत्यासेवितश्च कामः धर्मार्थाभ्यां विरहितो रजस्तमोभ्यां पूर्णः सत्त्वह्रासैकसत्कः स्त्रीपरत्व परिभावप्रकोपात् जगति गुणगौरवमतिक्रम्य दोषप्राचुर्यमेव प्रकोपयेत् ।

पुरा किल वाल्मीकिः क्रौञ्चमिथुनादेकवधशोकसंतप्तः शापशब्दैः शोकं श्लोकत्वमापादयन् धर्ममार्गमारूढः कविरादिरित्यभिख्यां लभमानः कवीनां उपजीवको बभूव । यथार्थाभिधानश्च सिद्धार्थकः शुद्धोदनार्थसाधकः सत्यपि कामार्थप्रतिपत्तिसाध्यसाधनसमूहनिर्बाधे मृगयाधर्मा क्षत्त्रभूतोऽपि क्षतात्त्राणपरत्वात् तदर्थमूलत्वाच्च कामार्थं साध्यसतीत्वयशोधरां यशोधरां त्रिवर्गसम्पच्छरीरभूतां गृहस्थयज्ञ-धर्मिणीं यज्ञक्रियामिव विन्दमानः दाम्पत्यगौरवरागरमणरमणीयः रमणीसहस्र व्याप्तान्तः पुरविहारः पौरवनितासखोऽप्यपौरवनीत्यसखः सौख्याखिल समेतोऽप्यसौख्याखिलसमवेतः मृगयाविहारीव्याध इव विहरन् विश्वासविशदान् विहगान् श्वापदांश्च हन्तुमुद्युक्तोऽपि शरसंहारं चकार पौरुषप्रवणः क्षत्रियोऽपि सन्नक्षत्रिय इव ब्रह्मजिज्ञासुः जगति मरणोत्पत्तिविकार वार्द्धक्य दर्शनेभ्यो बीभत्समानः नक्तमेव चौर्यचर्या-

चारीव सपुत्रदारं परिवारं परिजहाराराडमुनिदर्शनेन च मारविजयी बुद्धभूतो वैराग्यबुद्धिः बौद्धदर्शनव्याख्यानपरो निर्वाणमवाप । नानकोऽपि नाम नानानिभो ना नृणां नगण्योऽनिमिषगुणो निलिम्पनिष्ठो नैष्ठिकनीतिनिपुणो निहितनारकोण निष्ठान् निघ्नवृत्तींश्च नरजाङ्गल-लोलुपान् नराधमनायकान् नृशंसवृत्तींश्च नृपशून् नृसिंह इवापरः नताननान् दानवानिव निम्नतां निनाय । सकलत्रोऽप्यकलत्रः सः संसारसिन्धुसन्तरणसिद्धः गृहस्थगम्योऽपि परिव्राट् परिवार्य परिवारमपि पर्यटन् परितः प्रकाशमानः पुण्यैः परीतः पृथिव्याः प्रयाग प्रभृतीनि पुण्यस्थलानि परिबभ्राम । पौनः पुन्येव पूतिमाप्य पुण्यतीर्थेभ्यः प्राप्य प्रीतिं प्रसक्तिबहुलः प्राणिप्रियः प्रियप्राणिपालनः म्लेच्छपावकपरीतिः प्रज्वलितोऽपि प्रज्वलत्प्रतापः परां प्रीतिमापत् । प्राणिमात्राभ्यव-पत्तुकामश्च प्रियान् प्राणानपि परिपणयन् परपीडकान् परपीडितांश्च प्रायत्ततां प्रापयत् । परित्रातधौर्त्ये च प्राणिसम्प्रदाये पशुमारं मार्यमाणान् मानवान् परिररक्ष सः । सपुत्रदारं साम्बं च गृहं विहाय विनिद्रितजगज्जागरणाय धर्मसव्यपेक्षिपथप्रवर्त्तकः बौद्धसंगतिसंगतः निर्वाणमवाप्तवान् । महात्मा चासौ यशस्वियुगपुरुष इव व्याप्त-प्रख्यातिप्रसरः पुराणपुरुषगण्यो बभूव । सदश्वपृष्ठपर्याणोपविष्टश्च सादी सोल्लाससविलासविलसद्वल्लीवलय वेपमानविशदपर्णपुष्प-प्रकरप्राकाराकारपरिवेशमण्डलाभोगभूषितभूविलासिनीमिव प्रकृतिं प्रकामतः पश्यन् प्रौढ तारुण्यभरिततरुगणगौरवं च गिरां प्रकर्षेण प्रशंसन् पौरुषपारदृश्वा पुरुष इव प्रतिभानवान् हर्षवेगावेशविवशः विश्वसन् विधेर्वैभवे व्याधविधिविधित्सुः वातप्रमीवेगवल्गापितवा जिकः करकलितवाणकोदण्डः वैकक्ष्यकबद्धतूणीरः विपिनवीथिविरूढ-वृक्षविहितविद्रुतगतिः गतिमानिव कल्किकायः करवालकरः म्लेच्छ-निवहनिधननिराकृत् वातानीतशुष्कपत्रमिवेतस्ततो वाह्यमानः पुरुषः सन् प्रकृत्यैव प्रेर्यमाणः कदाचित् काननकनीनैणीनयननिहितनेत्रः नेत्रेषुमोक्षयोग्यामिव युवतिं सम्भाव्यभीवागुरावागुरितां श्रीसौष्ठव-शोभितां सम्मोहनायेषुमोक्षं यावदेव कृतवान् तावदेव धनुष्टङ्कार-समकक्ष्य एव चीत्कारः करुणाक्रन्ददारुणो हृद्विदारणः समुत्तस्थौ । वाजिवल्गासंहृतगतिश्चगां गतोऽसौ स्वलक्ष्मभेदभिन्नोदरामेणीं ताम-वलोक्य तदजिनेच्छुः पिशितप्रेप्सुश्च शावद्वयं निःश्वसत्तदुदरनिः सृतं प्राणनात्प्रागेव परासुभावमापन्नां विभाव्य चलितश्चेतसि गलितो गर्वरेतसि ज्वलितः क्षोभशोचिषा परोतः शुचा विनीतो दृशा गृहीतो

वैराग्यतृषा मनोमन्युगूढः दूषितो ज्ञाने मुषितो माने ह्रेपितो हिंसाऽऽदाने क्लेशितः कायकलिकल्याणे रूषितो रोगरुजा भूषितो भावुक्यवैभवेन खिन्नो हृदि भिन्नो नर्मसु स्विन्नः शरीरे क्लिन्नः नेत्रपक्ष्मणि छिन्नो मानमर्दने दिवसात्तस्मादारभ्य रम्यरमणरमणीयोदम्यदमनदम्भीयो धर्मधारणधौरेयो ध्यानधरणधिषणेयः मृदां चये च पराचीनः परमात्मनि परमप्रीतः प्रियसंख्यानबुद्धिः हठयोगयुक्तः हृदि रागरिक्तः मोक्षमीमांसकः प्राणिकदनोद्विग्नमनाः मौनैकमोही ध्यानैकदोहीचित्तैकाग्र्यधीविक्रमः श्रीसौभाग्यसंविग्नः मृगयां मृगमारणव्यसनमाकलय्यमूकेन मनसा म्लायति माधवे ऋतौ विलक्षलक्ष्यमाणासु दिक्षु शान्तविरुतौचञ्चरीक-कुले विकृतं विरुवति वायसगणे रसालतरुप्रविष्टे प्रशान्तवचसि परभृत-कुले निरुपद्रवप्राणिनाशरौद्ररोषरक्तनेत्रान्तराले नाकिकुले नीरवाकार-निर्मूके मुग्धमृतकबीभत्साकारे प्रकाशस्थले प्रक्षिप्य परशुशरशङ्कु प्रासासिपरिवारप्रमुखं सतूणीरं कोदण्डं तुरगवरं तमेवारुह्य मग्नो मनोमोहे निध्यानलीनमुनिरिव मनीषितं मन्वानः मुक्तात्मभावः हयमपि हृदा नैव नेष्यन् मुक्तहेषारवं च नैव प्रेम्णा प्राचोदयन् परमप्रीतः प्रायश्चित्तपराधीनः प्रापत्पुरं प्राज्यपर्यश्रुनेत्रः ।

अनिर्वेदे श्रियो मूलमवलोकमानो वीरोऽसौ प्रभुमन्त्रोत्साहशक्ति-सौभाग्यसिद्धिसाधनपरः निरीहव्याघ इव श्वापदवधैकव्याहारी दृढ-धैर्यधौरेयः शौर्यप्रमाणः स्थैर्यैकमार्गी वपुषि कठिनः मनस्यमलिनः क्षणापरे च कुसुमकोमलः मांसादनो मांसमृत्योः विकारी लोकोत्तरो लोकहृदयैकहारी हृष्टो रोमसु क्लिष्टो मर्मसु ह्रस्वो नर्मसु भ्रष्टः कर्मसु ध्वस्तो वर्मसु प्लुष्ट इव दग्धदेहे रुष्ट इवात्मनि मुग्ध इव मोहेन क्षुब्ध इव सर्वत्यागेन निर्वेदनिर्विण्णो धनुर्वेददिङ्मूढो दिङ्मोह-विभ्रान्तमृग इव धन्वनि त्यागतृष्तितीर्षुः राजपुरीमेव शून्याटवीमिव-मन्वानः भूभ्रमणभावाभिभूतः भ्रष्टचेतनः इव परिव्राट् परितो वृत्वा-ऽटनशीलोऽपि शिलीमुख इव शर्मत्यागी भ्रमविभ्रमभ्रान्तः श्रमविश्रम-शान्तः क्लमक्लिष्ट्यैकक्रान्तः जवनजन्तुजरणजीर्णः श्रमणतन्तुतरणतूर्णः काश्मर्यकुङ्कुमकुड्मलकिर्मरिकानूमीरराष्ट्ररमणोऽपि रामैकरमणो लक्ष्मणदेवः स्वदेशाटनागतरामकृष्णोपासनसंलग्नसाधुसंघसङ्घाती गृहस्थगतोऽपि संन्यासी ब्रह्मचारीचर्यः वानप्रस्थे वन्यजन्तुजीवनापहः वनप्रस्थानस्थायी स्थाणुरिव स्थूणास्थानस्थितः जानकीप्रसादाख्यस्य

साधोः साधुसमवाये श्रद्धापरोभूतः राष्ट्रत्यागैकनिष्ठापरः जानकीप्रसाद-शिष्यो बभूव ।

जानकीप्रसादवित्तो प्रियरामाभिरामोऽपि लक्ष्मणो यथा यौवनारम्भ एव प्रियोर्मिलोर्मिलाभलसदभिलाषतरङ्गिणीपारावारः परिवार-पयोधिचन्द्रोदये चञ्चत्पुटोज्ज्वल मणिमाणिक्यमौक्तिकः प्रजावत्सलोऽपि प्रजाविलासव्यवधानविधार्या रामानुजोरामानुजातप्रजातिः वनवासिराम रामानुसरणपरोऽनुजीवी हिंस्रश्वापदनिशाचरप्रतिभयेऽरण्ये रामैकरागी वैरागी पञ्चवटीं पर्यटनपटुः परिव्राड्भूतः परिवव्राज तथैव जानकी प्रसादप्रसादविल्लक्ष्मणदेवो रामदेवसुतः रामसुतकुशनामप्रख्यातपुरं कुशपुरं 'कुसूर' इति भाषागतं 'बाबारामथमन' वास्तव्यभूतं वैरागिसंघ सन्निवेशप्रायं पर्यटन् रामदासप्रमुख वैरागि संघसदस्यभूतः माधवदासापरनामधारी वैशाखसंक्रान्तिसमये वैशाख्याख्योत्सव समारोहविलाससोल्लासी सविधस्थल सरित्सन्निवेशदेवकुलविहारवर्ती नासिकनिकटवर्तिविन्ध्याटीवटपञ्चकप्रख्यातनाम्नीं पञ्चवटीमेवदण्ड-कारण्यभाजां भिक्षाट इव भेजे । या नाम युगयुगीनतपः पूता वाल्मीकि प्रभृति मुनिगणगतिगौरवा दाशरथिदोर्दण्डविहितकोदण्डविसृष्टशर-शलाकाशकलित शरीरपुरुषादशान्तर्षि समाधि संबाधसद्बन्धा, शूर्पणखा-कर्णनास्कर्त्तनान्नासिक्यनाम नूतनी पौरस्त्यपाश्चात्यपयोधि पुलिन-परिवेशा, अगस्त्याश्रमश्रितगोदा वरीकूलानुकूला सर्वर्तुशोभनाकारा समित्पुष्पकुशोदका मदमत्तसामजसमाजनार्दण्डोद्वान्तवारिवृष्टयुत्सेक संवर्धितपुष्पप्रकरप्राकारपूरितपादपपरिवारवारिता, कुररकुलकलर रमणीय मरिचपल्लवमालिनी करटिकरकुड्मलिततमाल किसलय लङ्कृता कीरकुलाकलितदाडिमद्रवार्द्रीकृततलैरतीवोद्दण्डमर्कटकुल कम्पितकक्कोलपल्लवकिर्मीरैः प्रततपतितपुष्परजः - प्रकरप्रकीर्णैः प्रवासिपुरुषपरिहितलवङ्गपल्लवतल्पैः केतकीचम्पक नालिकेरफल परिगतप्रान्तैः विपिनश्रीविश्रामवासैरिव विलासितावल्लीविनिवेशैः ललितैलालतालङ्कृतललामलम्बालकाकारप्राकारा वास्तव्यभूमिरिव विसंष्ठुलशाखामृगाणां शबरपल्ली परिवारितप्रदेशा, शबरपृतना-पतिप्रमथित प्रभूतकण्ठीरवारावा, कीनाशकेतुकेतनमिव कालकलित-कूला कालमहिषाधिष्ठिता च, सङ्गरसमुद्धतानीकिनीव शरशला-केषिका विषक्तविशिखबिशाखिकानिहित नरहरिनादा च, प्रावृट्श्रीरिव परिवारितपानीयापूरा, कोकिलकुलकालकण्ठकण्ठाला, शशधर इव

धराधृतशशाधारा, तिग्मरश्मिरिव तिग्मरश्मिराशिरभसीकृत रासभास्वरा ।

यस्यां च जानकीप्रसाद प्रभावाभिभूतो लक्ष्मणो लक्षणज्ञोऽपि लोभमृगतृष्णिकाया: मारीचहृत रामरक्षाभिलाषी मायामृगतृष्णाति रोहित: मृग इव मुग्ध: मातृमतिकोऽपि भ्रातृभार्यायां भाग्यभरण भूयिष्ठ: भक्तिमत्वाच्च भ्रतरि भ्रातृदु:ख भाजनो बभूव । जानकीप्रसाद प्रभावाभिभूतश्च लक्ष्मणदेव: मायामृगतृष्णिकातिरोहिताहारव्यवहार: परिहृतपरिवारव्यापार: प्रशमहेतुवय:परिणाम परिधेयप्रव्रज्या परिकलितकर्मकृत्य: कायकलौ क्रौर्यकर्कश: काश्यकृत इव कर्पटी कुटीरकमरिकारी खर्जूरपनसतमालताल पुन्नागतिनिशतिलकाशोक केतकचम्पकचंदनपर्णसाश्वकर्णाशमीकिंशुकखदिरपाटलपुष्पामोदसामोद: सौवर्णवर्णी वर्णिलिङ्गीव विधातु: विविक्तविहितविश्वास: साधुसमाज सदस्यभूत: रामदासाख्यापर वैरागिरागरञ्जित: प्रकृतिप्रजारञ्जनात् राजेव राजमाण: माधवे मधुमायाया: धवोऽसौ दमदयादानसाकारित्वा-द्दासित्वमाप्त: स्वधर्मस्य ध्यानमग्न इव मुनि: मौनीव मनोरागी प्रत्यहं दिवानिशं मननमुद्रामनस्वी वटपञ्चकमेव देवपञ्चकमिव मन्यमान: अष्टमूर्त्तेरेवमूर्त्ती:मूर्त्ता: मुमुक्षुमार्गीव मनसा मनोनिनीषु: निष्ठावानिव तपोनिधि: कौमारेऽपि कुमारमारणमुग्ध: कुमारकाङ्क्षिणीकन्याप्रकर्म परिकर्मपराङ्मुख: राजराजस्य विधातुरेव शापेनास्तंगमितमहिमा कान्तोऽप्याचान्तकान्ताविरह: गरीयोगुरुगौरवगानगुप्त: विहगगण-विरुतिविहितसंगीतग्रामराग: परभृतपञ्चमस्वर सौहित्यसोल्लास लासक: कलिकाकोरककलापोत्तंसिवल्लिविस्मयस्मेरसौभाग्य सम्भावित-कलापिकुल कोलाहल:, वासतेयीवासरमणीरसिक मृगलाञ्छन लसल्ललाटालकवल्लरीक: तरङ्गिणीतरङ्गकराग्रगृहीताभिवादन: कुल्याकूलाकलनकुशलकल्लोलक्षालितचरण: वटपञ्चकमध्यगतचन्द्र-मौलिमूर्त्तिरिव पञ्चशरशिरोरन्धनरौद्ररुद्र इव मनस्वी मानार्थागत-मानिमानिनी गणगीत गुणगौरव: गणैरिव विहगगणै: प्रमथैरिव मन्मथमथनमोहितै: मुनिगणैर्मानितो विहित होमाहुत्याहूतहव्यवाहनस्त्रि-कालदर्शी दुरितदुर्दिनान्धकारापनोद विनोदी, ओङ्कारमुखरमुखमुनि गणमतिवैराग्यगान्धारग्रामक: समाधिसंयम समाहित सिद्धवर्त्तिसाधन-साध्यो मन्त्रतन्त्रतर्कवितर्क जपज्ञानमूढ: औघरनाथाख्य सिद्धयोगियो-गाभ्यासव्यवहारविभावितो योगमुद्राभिलीन: प्रत्यहमौघरनाथशिष्यभूत:

परिचर्यापरत्वात्तद्गौरव गानगूढान्तर्भावनो भूतभावनोऽपि भूतनाशनो भवानीभवभावनीनः भैरवाचार्य इव भैरवाकारः सिद्धिसाधनैकरतः तथा नामाद्रितोऽभूतौघरनाथस्य यदा चार्येणाचारितः सन् समन्तात् सार्वकालिकतन्त्रक्रियासु सिद्धिसौष्ठवसिद्धिहस्तः गुरुगोरक्षनाथ शिष्य-सम्पादितसिद्धिग्रन्थोपादानदर्शी सिद्धाचार्यभूतः औघरनाथं सन्तुष्टमेव गतासुमवालोकयत् ।

सिद्धचोत्तम्भितश्च संसारसिन्धुसन्तरणसेतुभूतः आलानस्तम्भ इव मोहोन्मत्तसामजानां कूटपाकल इवाहङ्कारकरटीणां विषविसर्प इव वैधेय व्यवहाराणां आशुशुक्षणिरिव द्रोहविद्रोहदावानाम्, मृगादनः मौर्ख्यस्खलितमृगसंघानाम्, शललः क्रौर्यकौलेयकानां मृगयुरिन्द्रिय-मृगमारणः मृषावादिवादिविवादव्यपोहन विधुरः विषयैषिविधुन्तुद-तुदितविधुप्रायोऽपि प्रियजनरञ्जनराजकः रजस्वलारजोविकारवर्धी रमणोऽपि रमणीरमणारमणीयः रमणीयाराम रामणीयकरमणश्च रुद्रोऽप्यरौद्ररोपकः अक्षुद्रोऽपि क्षौद्रपोषकः निर्दक्षिणोऽपि दाक्षिण्यदोहकः निर्विकारोऽपि विक्रियाकार्यकोशकः दुर्विषह्यवेदनोऽपि निर्वेदमोदनः माधवदासः मायामयोऽप्यमायी तिरस्करिणीतिरोहिततनुरपि तिरस्कार-मुक्तः स्वतन्त्रकायस्थितिकर्मकौतुकी गोदावर्याः पौरस्त्यप्रदिशि प्रतस्थे। प्रागैतिह्यकाले प्रख्यातनवर्षिनिवासविन्यासभूमौ दण्डकारण्य-भाजि महाराष्ट्रापरनाम्नि वर्त्तमाने नन्देरस्थले मनोमोहमुदि मनन-मुद्राविधानविश्वासी कुटीरं कल्पयित्वा गोदावरीनीरनीरवारावर्वर्तिनि वातावरणे वेधोविधिविधित्सुः वृत्तिं वरयाञ्चकार । वैराग्यबुद्धि-भावितश्च पुमान् परमात्मपुरुषपर्याय प्रख्यातिपेशलं 'बन्दा' इति पारस्यभाषाशब्दविरुदं दधानः परिवारपुरुषैः परिजनैः परितोऽनुयान-परैश्च 'बन्दावैरागी' इति प्रोच्चार्यमाणः परां प्रतीतिमापत् । गुरुरयं शिष्याणां स्वनिवासस्थैः द्वाःस्थैरिव 'गुरुद्वार' गौरवगुप्तगृहः युगान्तेष्वपि 'बन्दाघाटगुरुद्वार' इति प्रख्यातिप्रवणत्वं प्रापितः । तात्कालिको निवासोऽस्य वैरागिमहात्मनः महत्त्वमापन्नः शिष्यगण-वन्दना विनिवेशमन्दिरमेव 'गुरुद्वार' इति प्रथितिं लेभे ।

बन्देरनिवास एव माधवदासस्य 'बन्दावैरागीत्यपरनाममहात्मनः काले गते तथा नाम गौरवमापादितः यथा नामर्षेः कस्याप्याश्रमः पुष्पवाटिकापरिहितः पुरुषस्त्रीप्रवेशपरिवेशहेतुकः दर्शनागतजनगणगीति संगीतसंगीतिसाधकः साधोरस्याशिषां वर्षणवृषेण्यः प्रतिवर्षागण्यजन-

गणगौरवपरिवृढः प्राणिपुरुषार्थबाधकतत्त्व साधकः मूलमन्त्रौषधितत्त्वोपचारचर्याचरित. अथर्वनिधेरस्य निष्ठानिर्णायकः नितरामूनसत्त्वैः श्रद्धापरैः भक्तिमद्भिश्च परिचर्यापरत्वमापेदे ।

रागानुरागरक्तो हि यः पुरा प्रावृट्प्रकाशे प्रकामपौरुषपर्याकुलः प्रेमीव प्रक्रान्तः प्रकृतिप्रेमिकापरिहितहृदयः प्राकृतप्रेमिकाप्रेमपर्युत्सुकः परितः पर्यटन् समदमदन इव रतिविविक्षुः प्राभवन्नैव प्रभुत्वमाप्तुम् विभुवैभवविवक्षमाणो वीतरागी वैरागी मुग्धमूकसत्त्वसत्त्वापहरणविगतचेतनः चित्तिमानिव चिन्ताज्वरः गृहस्थगतरुग्णो वानप्रस्थभेषजः आश्रमगतो वैद्यभूतः मूलमन्त्रसाधकसिद्ध इवापरः प्रातःसायमेवाहुतिदानपरः तपस्वीहविभिर्वैतानवह्नितर्पणः गायत्रीगानगौरवगरीयान् ओंकारमुखरवटुगणगणितगौरवः वटपञ्चकमध्यनिहितपर्यङ्कविहितपर्यङ्कासननिविष्टः समाधिसंयत इव दमशमयमनियमयुक्तः कन्दमूलफलाभ्यवहारी ब्रह्मासनसन्निविष्टोव्रतमनुववर्त्त । तपोनियमनिरतेसति तस्मिन् स्वनियोगयोगसिद्धितल्लीने सन्निहितसन्न्यासिसार्थसिद्धार्थसंविभागे कदाचित् कर्मप्रेरणे प्रेरयति पुरुषार्थसत्त्वसाधके मरीचिमालिनिमौनमास्थिते मुनिगणे मधुरं वाति सौम्यानिले सुधासेकसुकुमारारावराशिराशीभूते मन्त्रोच्चारचारणरवे रमणीयाकृतिः कर्मवीरः शूरैकशरण्यः क्रूरैकशरव्यः पञ्चनदीयपञ्चानननादः पञ्चापीयपुरुषसामजसमाजवृंतिवित्रासिगर्जनः रणाजिरनीरधिगतम्लेच्छमीनघस्मरः शिशुमारः यौवन एव यवनारिः धर्मयमनिका यमनयुक्तः सूत्रधारः हतारिविहितहल्लीसकाहूतारभटीनटशैलूषः शरशलाकाशङ्काशक्तिप्रासासिभुशुण्डियोधशौण्डीरः शमितिस्वैरमुच्चारयन् प्रागात्पुरस्तात् । वैरागिविश्रुतिश्रुतिधराः धराशायिनः साधवः साधोरस्य साधुत्वं समीक्षमाणाः आश्रमं यावदेव विविशुस्तावदेवासौ यातुधानान् पर्यङ्कपरिवर्त्तनाय प्रदिदेशप्रसक्तिप्रवणश्च मनोविनोदवैदुष्यमापेदे । प्रवृत्तिरियमलोकमान्यानैऋतकर्मकर्मणी न माधवदासाक्षिगतासमजनि । परं गतो दाक्षिणात्येष्वसौ सुविख्याततत्त्वप्रभावः साधुसमाजभाग्यद एव शोभां प्रतिपेदे ।

गोविन्दो गुरुः गरीयस्त्वं गतो गवि गृहस्थगतोऽपि वीराग्रणीर्वैरागी वैरिविनष्टपुत्र चतुष्टयः पुन्नाम्नो नरकात्त्रातोऽपि संत्रस्ताश्रमधर्मः क्षतात्त्राणपरः क्षतविक्षतकायः मुगलसम्राडवरङ्गजीवजनितजन्यराजन्याग्रजन्माजन्मान्तरजघन्यजातजनितासह्यप्रकृतिकोपानलदग्धदेहः

म्लेच्छसङ्गरश्रद्धालुः म्लेच्छमूर्च्छामूर्च्छनाग्रामरागी औपनिषदिकयुद्ध-मूलमन्त्रप्राकारिणं माधवदासं संजिगमिषुः साधुसमेत एव साधु-स्वभावत्वात् प्राकृततेजः पुञ्जप्रसराच्च पर्यङ्कमाघापितोऽपि नैव पर्यङ्कापरिवर्तनोपहासभाक्त्वमापेदे । साधुभ्यो विश्रुतगुरुगौरवोऽसौ स्वयमेव साह्यदानसव्यपेक्षी स्वागतगिरा तं ववन्दे। मुगलसम्राड-वरङ्गजीव आततायित्वमापन्नः गोविन्दजीवितापह्रो दुष्कर्मप्रतीकार-प्रतीक्षी गुरुगौरवनिर्माणगौरवः शिष्यसमूहप्रवीर्यप्राकारपरित्रस्तः दक्षिणेष्वेव गुरुमाहूतवान् संमन्त्रणाय। इहैव तेन स्वविजयगाथा 'ज़फ़रनामा' ग्रन्थे निगूहिता । अभिलिखितोऽयं लेखो न मुगलसम्राजमुद्वेजयामास ।

उद्विग्नोऽप्यनुद्विग्नोगोविन्दः सिंहनादमनुजुषाणः अजिनोपविष्टं माधवदासं दास्यदग्धदेहस्य स्वदेशस्य दुर्दशादौःस्थितिं यावदेव श्रावयामास तावदेव वैराग्यं भीरुत्वमेव मन्यमानोऽसौ पुनरपि प्रक्रान्त-पौरुषः पुरुषाधमपौरुषप्रणाशापेक्षी दानवदोर्दण्डदारणदोहृदीतपः प्रभाव-संकलिततेजः पुञ्जप्रसारासारः प्राणिहिंसनादेव बैराग्यगतः प्राणिनश्च श्वापदचेष्टिश्वागणिनिस्त्रिंशकर्त्तककर्मभ्यः परित्रातुमेव वैररागमाश्रितः क्षतविक्षतप्राणिप्रद्रुतचेताः यथैव मोहमापन्नस्तथैव क्षतविक्षतत्राणाय क्षात्रो धर्म इवापरः दानवमानमर्दीमानवपरित्राणतर्षी म्लेच्छभिमान-धर्षी धराविधानवर्धी कारुण्यकथामुपश्रुत्य गुरोः मुखारविन्दात् चलितश्चेतसि ग्लपितः श्रेयसि म्लपितो मुखे तिग्मस्तेजसि तितिक्ष-माणोऽपि तीक्ष्णप्रहारान् मनोगदान् सगदगदमिदमगदत्--"गुरो ! भगवन् ! नताननोऽहम् निन्द्यमिदं नृशंसं नृजन्मजातं जारयन् जीर्णतृण-कुटीरस्थपर्यङ्कविहितपर्यङ्कबन्धसाधनः कार्यकर्मकुशलोऽपि निष्कर्मण्यः क्रियाविभुक्तकारुरिव कृशकायः क्षम्यतां क्षणैककृतकातरत्वप्रपञ्चः । वीरोऽहं जनितो जनन्या जन्मान्तरजातजगद्द्रोहरोहीस्याम् निष्कर्मण्य-श्चेतिष्ठन् तिरस्कृतजनगणगौरवजघन्यजातजातिभावान् जन्मन्यस्मिन् तितिक्षमाण एव जीवेयम् । दुष्टकरटीकलिलमदगण्डकूटपाकलपुलकित-वपुष्कण्ठीरव इव कण्ठाराव (कण्ठीरव) रभसीकृत संरम्भपरिरब्धः दीर्घक्ष्वेडितमनुजुषाणः जृम्भकास्त्रमिव जर्भुराणः जम्भकारिरिव जृम्भमाणजम्भकजातिभाजः जातुषाभरणानीव जम्भारिः तेजोज्वाला-ज्वलत्तुषष्कान् चिकीर्षुः कार्पण्यजिहीर्षुः तैक्ष्ण्यतितीर्षुः वैषम्यविविक्षुः वैरिवनितावैधव्यदिदृक्षुः वैराग्यं विगतरागं मन्वानः वीर्यवृत्तिं सौभाग्यं

संमन्त्रयमाणः कातर्यं दुर्भाग्यं दर्शयन् नीतिकेवलित्व कातर्यं शौर्यकेवलित्वं च श्वापदचेष्टितं चर्चयन् चर्चितभस्मसर्वाङ्गीणो योगी भस्मभूषितभवभावनीनः भवानीविहीनोऽपि भवानीभक्तः भूभारभूतान् भूतानिव भस्मचयचरणशीलानिव भस्मचयतामानेतुमुत्सुकः भयङ्करभूभारतीनद्विषतः दोर्दण्डाञ्चितचन्द्रशेखरधनुरिवेषुधेरिषुवर्षणव्याकुलः खरांशुकरदूषणदोषद्रुग्धदुष्टारिखरदूषणदारणः रणत्दक्करणत्कारररणरणककर्मठः कौर्यङ्करप्रलयङ्करः प्रालेयाद्रेरपि प्रलयाङ्घ्रिप्रायपरिवारवर्ती दुष्टवारणानिव व्यालवृतान् विधित्सुः विकटम्लेच्छमानवान्, मुक्तमनोमोहः दग्धध्यानदोहः मृगादन इव म्लेच्छमृगमृगयालुः मुक्तमुमुक्षुवृत्तीकः धृतममूर्षुधैर्यः मानाभिमानिमानवारुन्तुदतत्त्वबोधिवृत्तविश्रुतिबोधिसत्त्वः सत्त्वान्तरस्वान्तसावनः संसारसवनसोमपीती दुर्वारद्विषद्दहनध्यानाधीती प्रत्यहं पुरुषस्त्रीपरिवारप्रहारप्रणाशपरिभावितात्मा प्रभावोत्साहसम्भावितचेताः चिताचैत्यविचितविचित्रवधव्यक्तविष्किरविकारविकृतगोविन्दगुरुगतासु पुत्रद्वयदूनदेहकः दिशि दिशि दुर्दम्यविद्रोहरोहधर्षणप्रसक्तदुष्टदाण्डपाशिकप्रचुरपुरुषकृतासहायजगज्जनगणसंहारव्यवहारसन्दष्टाधरः गोविन्दगुरुतेग़बहादुरक्रकचदारणदारुणदुर्व्यवहारविहितमर्मभेदनः वटपञ्चकमण्डपगतश्च कारुण्यकथां प्रतिक्षणं शृण्वन् दग्ध इव श्रवणयोः भ्रष्ट इव चेतसि मृदित इव माने मौनेऽपि स्फुटितो मर्मसुविदितवेदितव्यो जिज्ञासुः तपस्त्यागी तेजोभागी शूनः शरीरे तूर्णस्तिग्मतानवे भूम्ना भूभक्तिभावेन भरितः भ्राजमानः भवभूतिभावनः प्राज्यप्रायश्चित्तचित्तिमान् गुरुगौरवगाने गिरां गिरिष्ठाः आर्त्त इव वचसि मूर्त्त इव वपुषि धूर्त्तधिक्करणधौरेयः जन्मभुवमेव कर्मभुवं कुर्वाणः मूकमृगीमरणमूढमनस्कः धूर्त्तदानवदग्धमानवसहस्रार्त्तनादविस्मृतिविगतस्पृहः स्मृतशर्वशरणः सृष्टशरवणशरणः हिंसनह्रेपितधनञ्जय इव गोविन्दकल्पं गोविन्दगुरुं सगद्गदं गदन् गुप्तान्तर्दहन इव शमीतरुः विश्रान्तशम्प इवाब्दः हृदि धृतनिर्ह्रादः मदनमत्तोऽप्यमदनमत्तः बन्धुनिबन्धनबद्धबुद्धिः गोविन्दशिष्यभूतः भगवतो बन्धको 'बन्दः' इति वीरुद्वरणशीलः परमात्मपरमात्मप्रवणः प्राणपणेनापि प्राणिपरित्राणपणबन्धबद्धबुद्धिः मारात्मकमृगयुमृगवधविकारमर्दनमोहविक्लवः वैररागी वैरागी वीराग्रणीः वीर्याग्निगुप्तगौरवः भूभारतीभारभूतभयावहभूतप्रेतीभावभरितभावनः जगर्जगति ज्वरं जृम्भयन्नु—

'नतोऽहं नृनाथ! नृचक्ष! चक्षुष्मन्तं चन्द्रमसं त्वां निरीक्ष्य नष्टचन्द्रिकाक्षया इव तमोगुणबहुलाः भूभारतीभाग्यभग्नाशाः आशाः सम्भावयन्तु सुषुम्नरश्मितरणिमपि तेजसाऽतितिक्षमाणः तिरश्चामपि तर्जकं भूतानामपि मर्दकं धूर्त्तानामपि वर्धकं तुष्टाणामपि तर्दकं रुष्टाणामपि घर्षकम्, कृशानामपि कर्षकं कीनाशकेतुकल्पं सैंहिकेय सिंहासनमासीनं म्लेच्छराजमप्यवलोक्य भियाभिभूतो भवामिन। भगवानिव भवान् भयावहेऽश्रमणयोग्ये कालमहिषमुषिततेजः प्रसरेऽगणितगजकुल कलिते तैतिलवराहावरुद्धदिक्पथप्रचारे कान्तारेऽस्मिन् भ्राम्यन् नमनागपि भीषितः। धन्या साऽम्बा जनितोऽसि यया। महानसौ पिता येन दिक्षु प्रथित यशसा देशाहितगौरवेण गरीयस्त्वमाप्तुमेव स्वशिरः शातितम्न नतिमानीतम्। सौभाग्यसौहित्य सौष्ठवा सा स्त्री यया सुतचतुष्टय प्राणाहुतिभिः 'वीरसू' रिति वीरुदमवाप्य प्राणिसहस्रप्राणसंरक्षणाय स्वदेशसत्त्वसौभाग्यं संरक्षितम्। अनिर्घृणा हि सा या सुतद्वयं समक्षमेव कुड्यप्राकारितं जीवितमेवं निष्पन्दीक्रियमाणं विलोक्य निरश्रुमुखी न नतानना ननाम नृशंसनिर्घृणनृपशुपाशववृत्तिव्यवहारेभ्यः। वंशोन्मूलनविद्रुता च विसंज्ञेव विलपन्ती न तत्याजासून धीरतया। प्राणिति सा प्रोषितप्राणं पुत्रचतुष्टयमपि प्रगुणित गुणगणगौरवमेव चिकीर्षन्ती। अप्रजाऽपि सप्रजैव सा सत्त्वोद्रिक्तैः सप्रमाणैः प्रवीरैः। प्रक्रान्तपौरुषोऽपि भगवान् भगवद्विभूतिविहितात्मभावः अतिचारव्यभिचार विध्वंसकारी निर्मुक्तमोह एव कायकलौ यशःकाये संकल्पशुद्धः निरस्तात्मजोऽभिव्यक्तात्मजातिः जन्मान्तरजधन्यकृतपरिणामप्रत्यक्ष्यपि जन्मनाऽनेन जनगणजन्मजिजीविषयाणः पितेव प्रजाः पालनपरः प्रजानाथ इव प्रजासनाथः प्राज्यभूभारधारणक्षमः क्षितीशः क्षमावानप्यविकत्थनः क्रियालुः कर्मण्यधिकार प्रवणः श्रद्धालुः सर्वथैव मे प्रशस्तिपात्रं समजनि। सुखदुःखयोः समस्वभावः भवदधीनः शिष्यः प्राणपणेनापि प्राणिगणप्राणरक्षां विधास्ये न मनागपि मनोगतं मनसापि मोहगतः परिहास्ये। राष्ट्रेष्ट देवप्रतिमाः प्रतिनगरं भज्यमानाः शोणितशोथं मे भावयन्ति। सर्वत एव तीक्ष्णाग्निरसदाः म्लेच्छमारकाः शवं शवं धर्षयन्तः धरां रक्तविप्लुतां कुर्वन्ति। सतीनां सहस्रस्योरोभ्यः हाहाध्वनि निःश्वासाश्च निःसरन्ति। विकटानायसन्दानिता भूजननीदानवापमानवेपमाना धिक्कुर्वाणा मां मोहयति पदे पदे वनितालक्षलज्जालोपश्च सार्त्तनादं नादयति मां धर्मान्वयेजाति परम्पराश्च सोपालम्भं सोत्प्रासं च सन्तापयन्ति मां

गतोऽसि वीर । जघन्यतां क्लैव्याक्रान्तश्च न धावसि किं न कार्मुकं शरासार वर्षणाय शत्रुषु ? राजपुत्रोऽहं राज्ञां पुत्रानेव स्वपौरुषेण सन्तर्पयिष्ये । निशम्य निनदं नरहरेः नृप इव निष्ठावान् नायकमनीकिनीनां चिकीर्षुस्तं साह्लादमुवाद परिरभ्य दोर्भ्याम्—'तुष्टोऽस्मि वीर ! तितिक्षमाणश्च तिरस्कारं प्रतीकारतृष्णाकुलः नायकमवाप्य महानुभावं भ्राजिष्णुरूपं ब्रह्मणः प्रतिरूपं क्षात्रं धर्ममिव साक्षात् सम्भाव्य तैजसं पार्थं त्वां रथेषया रेरिहाणः 'ख़ालसा' संघ नेतृत्वे नियोज्य कृपाणपाणिं त्वां पृतनाप्रग्रहं प्रवीरवृषभं प्रहाराय प्रोत्तेजयन् प्रदिशाम्यादेशम्—'प्रलये प्रलीनभूपाले निलये निलीननृनाशे विषये विध्वंसविश्वासे नृशये नृशंसनृपनाथे शवाधाने च श्मशाने शितशरप्रसारकासारे हितहेलितितिव्यूहव्यवहारे धृतधैर्यधर्मी अकृतक्रौर्यकर्मी श्रितशौर्यशर्मी अकातर्यकर्ता अवैधव्यवर्धी विहितवीरधर्मा निहितनीचमर्मा व्यलीकेष्वव्यलीकी प्रतीकेष्वप्रतीक्षी विहितात्मभावः परमर्मभेदी वरकर्मयोगी नरनर्मनर्त्ती नतः सम्प्रदाये नैव सम्पराये गतो धर्मदाहे नहि भर्मभारे रतो राष्ट्रवादे नहि भ्रष्टभावे धृतो धैर्यदोहे नहि क्रौर्यमोहे हृतो हर्षहावे नहि तर्षतोषे वृतो वर्मवेशे नहि चर्मशोषे स्व सम्प्रदाये परीवादवादं मा कार्षीः । मायाः धवो माधव इवासौ माधवः माधवस्यैवदासभूतो माधवदासः स्वदेश्य-दास्यद्रुग्धः विद्रोहरोहारूढः रुद्र इव मदनदाही क्षौद्रपटलपाटलान् रोषरक्तचक्षुष्कान् चर्मवर्म चञ्चद्वपुष्कान् स्वसैनिकान् संपरिवार्य सम्परायसम्प्र तूर्णः तूणीरशरश्रद्धालुः शत्रुगृध्रमृगयालुः शिशुरपि सिंहः करटीगण्डभेदनप्रवणः क्षात्रोधर्म इव साक्षात् ब्रह्मविट्शूद्रान् क्षतात्त्राणपरःपरमेष्ठी परपरिमाण मर्मजिज्ञासुः दिशां जिगीषुर्विजिगीषुः स्वमण्डलमण्डलितः परमण्डलपरिमण्डलीजिघांसुः 'मृगो न भीमः कुचरो गिरिष्ठाः' जगर्ज गौरवाकूतः ।

भावो गुरुर्गौरवगानगृध्नुः
शिष्यो भवाम्याहितधर्ममर्मा ।
नम्राननो नूनमनूनसत्त्वः
सत्त्वार्थकामां नु धियम् प्रपद्ये ॥ २ ॥

सत्त्वतत्त्वपराक्रमधर्मी भवान् मान्य एव जगतां यद्विजिगीषु-भावगर्वितान् म्लेच्छानपि मोहमापन्नान् मुमुक्षुः साह्लादानान्नैव

प्रमादमापेदे। तथाहि—दक्षिणात्येषु विचरन् स्वसत्व सन्त्रासितेना-वरङ्गजीवेन सम्राजासम्भावनाव्यपदेशेनाहूतः स्वसुतशोकसमभिभूतोऽपि संकथा समाचरणाय सञ्चलितः मन्युमानवर्जितः पितृप्राणापहारकेणापि शत्रुणा सन्दिधित्सुः सप्ताधिकसप्तशतोत्तरसहस्रतमेऽब्दे फाल्गुनमासे तच्छत्रोरकालनिधनमुपनिशम्यापि शत्रोः पुत्रद्वयस्य राज्याभिषेक-विद्रोहेऽद्रुग्ध एव द्रोहिकुमारमुहम्मदाज़मधर्षणाय ज्येष्ठावरमुहम्मदमु-अज्ज़मसाह्यदानविहितमतिः आषाढमासे स्वसैन्यसमेतः समाजगाम समाहूतः। जजौस्थले पराजितः कनीयान् ज्यायांश्च विजितः बहादुरशाहवीरुदमापेदे सम्राट्सिंहासनारूढश्च सः गुरुं जग्राहोपहारैः। परं भगवन्! न जानीते भवान् साह्यदानेन शत्रोः गृहकलहायितयोः भ्रात्रोः भावो यथा पूरितः ज्यायसस्तेन न सम्मानितो भवान् स्वपुत्र-वधकविश्वासे। द्वैधीभाव एवात्र श्रेयानभवत् द्वयोः कलहायमानयोः कालकवलनमेवास्मच्छक्ति संवर्धकञ्च।

निशम्य तद्वचो बन्दाबन्धोः गुरुर्गरीयान् गरिमाणमाप्तः स्वागतगिरा गौरवं सम्प्रपन्नः श्रद्धालुः तद्वीरवाक्ये 'बन्दा' इति नाम 'बहादुरः' सम्प्रचख्ये। सम्प्रेरितो वीरवाक्येन तेन प्रादात्सः तमसिं स्वकीयम्। सासिः स्वकीयैः शिष्यैः संगृहीतः गुरोर्गैरिवं द्विगुणं चकार। निशश्वसे सः सुखनिश्वासं विशश्वसे च विश्वस्मिन् ख़ालसासंघभावे। प्रोवाच तूर्णम्—"वरिवीर! वर्धतां भवान् वीराग्रणीः वीरमानी वीर्यैकसत्त्वतत्त्वविज्ञानी विश्वासभूमिर्भवान् मन्येऽहं प्रतिनिःश्वासं मातृभूमेरेव परिरक्षणपरः सर्वदेवदिव्यः दानवदाहदोर्दम्यः यत्किञ्चनाप्यभाषत तत्सर्वमेव सर्वज्ञतां विशिनष्टि। नीतिस्तावदितीयत्येव यत् उपकर्त्रा ह्यरिणा तावदेव सन्धातव्यं यावत्सः नः कार्यप्रतिपत्तिमनुबध्नीयात् नोचेदनन्तरं 'कातर्यं केवलानीतिः शौर्यं श्वापदचेष्टितम्' इत्येवभावः प्रथीयताम्। सम्यक्सम्बोधितोऽहं भवता "यच्छत्रुः शत्रुरेव साधीयान् समययापनायैवमित्रीकृतोऽपि न सुखावहः स्यात्"। महत्यभूत्प्रत्याशा मे यन्मित्रीकरणेन सः संयुगे च साह्यदानादसौ सुतद्वयस्य मे मारकान् कालपाशिकानिव दण्डपाशिकान् तस्यै अर्पयिष्यति परं सम्प्रतारितोऽहं तेन स्वसत्त्वसंस्पर्शी पर-तत्त्वाभिमर्शी त्वयि प्राप्तेसति सौभ्रातरि स्वदोषनिर्दाहनिर्विण्णः प्रायश्चित्तिमापन्नः बीभत्समानश्चानुपकर्तुररिनराधमात् भवदुत्कृष्ट-व्यक्तित्वक्रियाकलापपरिभावितो बन्देरस्थले भवता समागतः

सम्भावितश्च सम्यक् सम्पूजितः समतत्त्वदर्शित्वमापादितः धीवैपरीत्य-विध्वस्तोऽपि विवेकित्वमानायितः भवन्तं स्वसंघसौख्यसौहित्याय नेतृत्वमापादये नेतृत्वमापन्नाश्च बन्दः वीर्यैकबन्धनः प्रबन्धक इव पृतनानां परशुशरशङ्कुप्रासादितोमरभिन्दिपालनाराचादिप्रहरणशत-शौण्डीर्यदर्शनः समदर्शनोऽपि विषमदर्शनस्त्रिपुरारिः कामदहनः पञ्चेषुर्मदनरसमर्दनः गुरुणा गोविन्देन गाः विन्दानः स्फूर्तिमयीः शरपञ्चकप्रदान प्रसादवित्तकः प्रोल्लसत्प्राणप्रियालुः प्रतिज्ञापरयौ-गन्धरायण इव प्रतिज्ञातयौगन्धरायणः युगन्धर इव युवयुग्मधरः ब्रह्मैकचारीसब्रह्मचारी स्वसंघैकसेनो गुरुभक्तभूतः पञ्चव्रतव्रातभूतान् सायकान् समभ्यर्च्यासत्यप्रमाथी तु सत्यैकवादी स्त्री पारायणस्तु स्त्रीपरित्राणपरः पुमांश्च पुमर्थप्रमाणः गुरुरपि गुरुवादभीतः शिष्यश्च सिंहासनासीनः अरातिभ्रममर्दनो मृगारातिः मृषावादिवातवातूलः मृदङ्गध्वजच्छत्रचामरचिह्नचारी पञ्चभिः प्रियैः विनोदसिंह कहनसिंह-दयासिंह - रामसिंहबाजसिंहप्रवीरपञ्चकैरनुगम्यमानः विंशतिशूरैश्च परिवारितः प्रजापतिरिव प्रजापतित्व प्रतिष्ठः पञ्चापपुण्यम् पञ्चाप-प्रदेशं प्रपित्सुः पञ्चाप्तपुरुषपरिवृतः विंशतिसम्पिण्डितैः पञ्चविंशति-पुरुषाधिष्ठितः पञ्चविंशतिसहस्र प्राणिपरित्राणप्रतिज्ञातप्राणपणः पञ्चाग्निसाध्यान् पञ्चनियमानेव प्रतिष्ठासुः अष्टोत्तरसप्तशतोत्तर-सहस्रतमे ख्रीष्टाब्दे गुरोर्वधव्याप्तविषस्फूर्जितफणाभित्तिभृद्व्याल इव वपुष्मान् पञ्चापमागात् प्रतूर्णम् ।

इति डा० सुदर्शनशर्मणां कृते वीरवैरागिचरिते

द्वितीय उच्छ्वासः ॥

# अथ तृतीय उच्छ्वासः

पुण्या हि पञ्चापपवित्ररूपा
सा भूतधात्री ननु धर्मगूढा ।
या वैदिकीवृत्तिविशेषमूला
पूज्या परंपुण्य जनैकरम्या ।। १ ।।

प्राणान्तिकीवृत्तिविशेषयुक्ताः
वीराश्च यस्यां ननु धर्मभृत्याः ।
वाचां यमेनैव युताः स्वयुक्त्या
योधाग्रगण्याः ननु गौरवाढ्याः ।। २ ।।

सप्तस्वसा सैन्धवसक्तसस्या
सौभाग्यदुर्भाग्यविशाखिकाढ्या ।
सोपद्रवा चैव शमप्रधाना
प्रश्लेशिता क्लिष्टिगतैर्नुयोगैः ।। ३ ।।

विभ्रमभ्रमणभ्रमरो भ्रमर इव प्रतिपुष्पासवपिपासुः प्रवृत्तिसारासारवर्षी वृषाकपिरिव वपुष्मान् उदीयमानस्तिग्मरश्मिः रथेषया राष्ट्ररागैकरागी अरुण इव रक्तमार्गी वरुण इव विनीतिनेतानारायणः नृणामग्रणीरगण्यगुणः गुरुगौरवाढ्यः तेजः पुञ्जप्रसरप्रसारी प्रावृट्पयोद इव स्तनयित्नुः स्त्यानाश्मस्थल जलज्वलनजीवनश्रद्धालुः शरीरी शर्मालुः सर्वथैव प्राणैरपि प्राणिपरित्राणपणबन्धबन्धुः बन्धुवर्यैकवर्धनबद्धबुद्धिः वयोयुवापि प्राज्यतेजाः प्राज्याज्याहुतिपूतप्राणिप्रसरां स्वधरां धारणाय धृतव्रतः दृढपरिमाणः कर्मप्रमाणः फलापरिणामः प्रमाणविदप्यप्रमाणविद्यः दारुणकर्मकृतां कर्मसु क्रौर्यनिष्ठः कृपाणकृत्तकन्धरमपि गुरुं स्वकीयं स्वकबन्धकीयं विभाव्य नृसिंह इवावताररूपः म्लेच्छान् प्रमार्ष्टुं मृगानिव मृगादनः मृगयालुः मुमूर्षूणामग्रगण्यः प्राणान् कण्ठगतान् विधाय नीलकण्ठ इव कण्ठनीलः

कालकूटामिव पिपासुः प्रतर्दन इव पराक्रमी पुरुषोत्तमः प्रशस्यतमः प्रशिष्यश्च प्राचार्यभूतः घोरप्रचारं कान्तारमिवाकलयन् कलिकाल-कश्मलितं कालकलिं क्रोधाविष्ट इव कालसर्पः फूत्कृत्य फूत्कृत्य प्रवेपमानः प्रोद्धूय वदनं प्रोत्कृत्य चोष्ठं प्रविघूर्णमाणः प्रागात्पुरं प्राक्तनप्रापनीयम् ।

दिल्लीपुरी प्राक्तनढिल्लिकाख्या
संस्थापिता तैस्प्रतिहारराजैः ।
काष्ठाः कृताकृष्टिकृतप्रकाशाः
पारंगतैः प्राणपणापणीनाः ॥ ४ ॥

कलिन्दकन्या कीनाशकनीयसीस्वसासती कीनाशप्रायराजकुल-कलिला कलङ्किता कुलाङ्गाराणां कालिम्ना कूलंकषा क्षुब्धसलिला च सुतरां सम्भावनीया नाभवत् पुंभिः अत एव वीरो वैरागी वैररागीव गरीयान् गुरुगौरवाढ्यः गर्वाढ्यः सन्नपि न धनाढ्यः धनजनलिप्सुः सृक्कणी लेलिहानः 'बरिया'स्थले शिविरमावास्य प्रतीक्षमाणः वीवधा-सारप्रसारमनुजुषाणः 'सधौरा'स्थलं लङ्घनायेष्टकाचयतां नीत्वा तत्तत्रत्यान् मोहम्मदांश्चेष्टिपशुमारं मारयित्वा 'बुद्धुशाह'तच्छिष्य-संघशूलारोपणे रोषारुणितनेत्रः दिल्लीसम्राट्स्वभाव दुर्भावद्वेषदुर्दम्यः गुरुसाह्यदानसव्यपेक्षि-बुद्धशाहश्रद्धालुः मृगालुरिव मृगादनः दुष्टवराह-प्रोथपर्शुकान् स्वशरान् तूणीरेभ्यः निःसारं निःसारं तथा नाम कोदण्डा-दवर्षयत् यथा नाम नरनासिकालोलुपाः भल्लूका इव श्मश्रुलाः शूनोदराः शातिताः भुवं श्मशानस्थलमिव दर्शयाम्बभूवुः । 'वजीरखानो'ऽपि महीयान्नृशंसः गुरुगौरवग्रसन संग्रामी 'सरहिन्द'-प्रशास्ता गुरुपुत्रद्वय-मारणमृगयुः मुमूर्षुरेव मृगाराति मर्दनमनीषी मोक्षैकमार्गी वैरागिकरक-मलाभ्यामेव मृणालतन्तुरिव तिरोहितो वभूव । प्रदृष्टश्च गुरुरसौ वैरागिणं पर्वतकान्क्षुद्रसामन्तान् क्षुपोच्छेद मुत्तोल्य संहारार्थमादिदेश । द्रुग्धाः द्रुहिलाः दौरात्म्यदग्धा एव देशिदारणद्रढीयांसः दद्रूधूर्ता इव स्वकीयानपि धर्षणरता अर्थकल्यवर्त्तनैवाकलय्य कार्यतत्त्वं शत्रुभिरेव सन्धित्सवः सुतरां धरामिमां धर्षयामासुरत एव शुचिनामनिष्ठोऽपि चेतस्यशुचीनभावः श्रुतयानन्दो (सुच्चानन्द) नाम नृपशुः पाशववृत्ति-वर्तनः गोविन्दगुरोरपत्यद्वयकुड्यीकरणे दहद्दायित्वदायी देशिजनगण-दुःखासिकादानपरो जघन्यः सन् वैरागिवीरहेतिततितिग्मधाराक्रान्त-

कन्धरो धराशायी शयान: शूनान्तराल: शृगाल इवात्तस्नाय्वान्त्रनेत्र-प्रेतरङ्कै: कपालकरङ्कङ्कषै: कवलित: दुर्गगतस्वसैन्यदलदुर्गत दोहदाया-लम्बभूव। वैरागिवीरवैरविकारविसरविध्वंसप्रसरप्रसारपुरुष काररौद्र-दारण दोहलमालोक्य दुर्गद्वाररक्षी शातघ्न्यगोलवर्षणायादिदेश। तूणीरगतशरासारवर्षेश्च वैरागी भौशुण्डयशातघ्न्यगोलान् मध्येमार्गमेव चूर्णीचकार। तथाविधे गते साम्पराये सममेधश्चयीभूतेषु आरक्षिपुरुषेषु दुर्गमशवशिविरमिवाभासमानं यौगन्धरीणशक्तिशातित तारक तारकितं भग्नशिरोधराशिरा: शिराजालजालकितं शीर्णदीर्णदिवंगतजीव जीर्णा-रण्यमिव शून्यं समजनि। हिन्दुशर शकलित शिरस्कमोहम्मदं स्थलमिदं सरहिन्दाख्यं हिन्दुजनस्वातन्त्र्यचिह्नाकारपताकास्थानकै: पताकायितम भवत्। हिन्दुगणशिरोरत्नभूतमिदं सरहिन्दस्थलं सौरमण्डलाखण्डले-लावृत्प्राकारपरिकरितं गोपुरतोरणद्वारगतध्वजधूननं न्यदधात्।

अनुश्रूयते यत् सरहिन्दविजयात्प्राक् वैरागिवीर: धनाभावात् वीवधासार प्रसारसरणि संकटविकटवैभव: शत्रुशातनशील एव मनस्वी व्यापारिणा केनचित् स्वीयायतो भागदशकमवाप्य प्रवर्धमान: स्वसैन्यै: कपिलस्थल कपिस्थलाद्यतनीय कैथलस्थलीयग्रामात् यान्तमेकं कोश-धृतमपि पुरुषं हत्वा स्वधनेषणां सम्पूर्णां चकार। 'मृध्वधूवरणे हृद्वधूवरणे च सर्वं सापेक्ष्यमपेक्ष्यं वा न्याय्यमेव भवति' इति विधि मा कलय्य दस्युभावोऽप्यस्य देशिदास्यदूषणदारकं प्रशस्यं भूयात्। ग्रामे कस्मिन् दस्युदूना: ग्रामीणा: दस्युदौरात्म्यदूना: वैरागिवीरेणै-वावस्कद्यमारितैर्दस्युभि: दु:खासिकादीर्णा: सुखिन: कृता: तद्वीरत्व-प्रशस्तिचिख्यासना: तद्गौरवमेव गीतवन्त:। द्रोहिदस्युदारणाय दस्युभावभावनमप्यस्य सुखपक्षीयं स्यात् गुणगरिमाणं चादध्यादिति भणितिरत्र श्लाघ्या।

बङ्गारग्रामोपस्थस्थायी च वैरागी दस्युद्रोहविद्रोहविद्रावितै: ग्रामीणै: त्रासगद्गदं गदद्भि: प्रभावित: ग्रामविध्वंसदोषापेक्षी स्वपौरुषप्रवणांस्तान् संविधाय पार्ष्णिग्राहांस्तान् संरक्ष्य स्वभुजदण्ड-कोदण्डकर्षणकुशल: दस्युद्विष्ट: दुष्टांस्तान् दस्यून् दमनादेशदक्ष: दमनायादिदेश। दस्यवश्च ते लुण्टाका एव प्रकाशवीरवैरागिवैरवैर-स्याविधिविषहणविसंष्ठुला: वैरागिवीरगणग्रसिता: पदै: स्खलित: कान्दिशीका: बभूवु:। विद्रुताश्च ते प्राक्तनस्थलापहृतलोप्त्राण्यपि व्यस्राक्षु:। वैरागिहस्त प्रापितानि च लोप्त्राणि पुनरपि लुण्ठित-

जनगणहस्तगतानि कृतानि । तानि प्राप्य ग्रामीणाः तस्मै आशिष एव प्रादुः । आशीभिरेव प्रोत्साहितोऽसौ जनगणहितविधित्सुः दस्युद्रुग्धजनविध्वंसनबद्धपरिकरः संनद्धवीरपुरुषप्रकटितशौर्यातिशयः नीतिनुन्नशौर्यसम्भावितसौहार्दश्च सः सौराज्यरागी वैराज्यवैरागी विध्वंसकृतां विध्वंसकः नृशंसकृद्भ्यो नृशंस कृत्कः दलितदलदलन-दुहिलदारणदक्षः, दुष्टसंहारविहारी, कष्टसंवारसंस्कारी व्यव-सायितायुतर्दनतृषालुः स्वभयस्तातताय्यध्यक्षप्रतारणशयालुः श्रद्धालूनां श्रद्धालुः शर्धतां च शातनशीलः मुग़लसम्राजां मारात्मकमनोवृत्तीनां मथनमनीषी अमानवीयमानवमर्दनमोहमूढः मिथ्यावादिमृषावाद-विषूचिकाविनाशकारी गोविन्दगुरोरग्रमार्गण इवाग्रगामी सर्ववीरान् वैरिणां वीर्यं विरसीकर्त्तुं व्याख्यानमददात् । व्याख्यानमस्य निशम्य नृणां निकायाः केतनेषु केतूनाकलय्य चेकिताना: साकूत-माख्यन्तः संख्यातवीरपुरुषानसंख्यातमात्रामापादयन् । वैरागिवीरः वीररागमेवोच्चैस्तमां गायन् गुरुगौरवगानगरीयान् स्वयमेव गुरुगौरवगुप्तः सुगुप्तिगुप्तैः गोविन्दसिंहशिष्यैः गुरोरस्यावतार-समतामापादितः गोविन्दमार्गणाश्च तैः विजयशपथपदवीमापादितः सहायीकृताः। सैन्यदलान्यत्र त्रिविधान्येवासन्। एकानि तानि येषु वीराः सैनिकाः जीवितनिरपेक्षाः प्राणपणैरपि गुरुगोविन्दगौरवे भक्तिमन्तः अपराणि तानि येषु रामसिंहत्रिलोकसिंहसामन्तनायक-निष्ठावन्तः स्वार्थपराः सर्वस्वमेव स्वं स्वीकर्त्तुमुत्सुकाः प्रलोभ्यलोभैः परिक्रीताः पार्ष्णिस्थाः पुरुषद्रव्यसम्पत्संयोजयन्तः प्राणानेव परित्राय कार्याणि कुर्वाणाः वैरागिवीरसाह्यमकुर्वन्। तृतीयाश्च ते ये लोप्त्र-घस्मराः लुण्टाका इव विकटस्थितिस्थानशीलाः साहसिकाः पुरगोपुर-प्राकारतोरणभङ्क्तिभिर्दाहैर्वा दुराचारविदग्धाः द्रोहिदस्युभूतदानव-दौरात्म्यद्रुहिलसंमर्दविमर्दकुशलारिविदारणपेशलाः प्राणापहारिणः ।

कपिलस्थलकोशहरणवृत्तान्तः तत्स्थानीयप्रशासकेनामिलेन यदा लब्धस्तदैव सः स्वानीकिनीभिः सन्नद्धः अश्वारोहबहुलः पत्तिप्रायान् वैरागिवीरशिष्यानाक्रमितुं स्थलं तत्प्राप्तवान् । वैरागिवीरोऽत्र मनसि चकार यत्पार्श्ववर्त्तिवनद्रुमगुल्मतृणकक्षकण्टकिलप्रदेश एव सैन्यगुप्तिः समयप्रतीता । अश्वारोहाश्च क्षुपोच्छेदमुत्तोलनाय पद्गन्तारो बभूवुः । तद्गतांस्तानवलोक्य वैरागीवीराग्रणीर्वीरान् स्वान् इङ्गिताकाराभ्यां उद्भाव्य गुल्मकक्षेभ्यः निःसार्य चाश्वाना-

रोहयितुं प्रेरितवान् । अश्वारूढैश्च तैः प्रशासकपत्तयः कृपाणधाराभिः कृत्तकन्धराः विनेशुरमिलश्च बन्दीग्राहं गृहीतः प्रतिमुक्तश्च समयतो यदसौ स्वमश्वीयमेव तदीयवीरेभ्यः समर्पयिष्यति। अश्वीयं हस्तगतं लोप्त्राणि च सैन्यत्रितये विभक्तानि नेतुर्वैरागिणो निस्वार्थभावत्वं प्रकटीचकार येन सर्वं एव सैनिकाः तदीया एव भक्ताः बभूवुः ।

गोविन्दगुरोर्गुरोस्तेग़बहादुरस्य ग्रीवाकृत् जलालुद्दीनः 'समाना' स्थलवास्तव्योऽभूत् । वैरागी तत्कारणादपि प्रतीकारविवित्सुः वीरान् स्वानग्रेचकार । वज़ीरखाननामा सरहिन्दशास्ता वैरागिवीरवैर-कृत्यानि विभाव्य परां चिन्तामापेदे। शिष्यसैन्यानिसंयन्तुं सोऽलि-सिंह-मालिसिंह-गुरुदयालुसिंह सूबासिंहप्रख्यात् सलौद ग्रामवास्तव्यान् सिंहसामन्तान् सभासदांश्चकार तेषां पुरस्ताच्च गुरोर्गोविन्दस्य वीराणाम् वैरागिवीरपौरुषञ्चाधरीचकार । असंमर्षिणस्ते चत्वार एव स्वसेवां तदीयगतां संकोच्य स्वभृतिवृत्तिपूरीकरणाय प्रार्थितवन्तः। वज़ीरखानश्च तान् सर्वानेव निगडीकृत्य कारागृहप्रवेशाय घोषयाञ्चक्रे। कारागाराध्यक्षसाह्येन चत्वार एव तमिस्रानीरन्ध्रतमसि नगराद्बहिर्निस्सृत्य पलायिताः वैरागिवीरमधिगत्य च शास्तुः प्रयोग-प्रमाणान्यादाय प्रादुः । तेषां सहयोगैश्च वैरागिवीरः स्वपराक्रम-परिक्रमणपेशलः प्रोत्साहितः प्रयोगान् स्वीयान् पृथुरीचकार। 'समाना'-पत्तनं पुरातनपुरेषु समृद्धिसम्भृतम् सौभाग्यसम्पदमापेदे। अत एवेदं वैरागिधनैषणापूरणायालम्बभूव । सय्यदमुग़लसामन्तसमेतं च सदिदं वैरागिवीरवैरविधिविधानाय निहितलक्ष्यमभवत्। वैरागि-वीरो वीराग्रणीः वीरवारणवृन्दवरीयान् विध्वंसकृत्कर्मक्रूरान् मुग़लान् मुमूर्षून् इष्टिपशुमारं मारणाय शलभप्रायप्रपतनकुशलान् प्रवीरान् स्वान् परापतितुमादिदेश। शत्रुशक्तिसौष्ठवमधरमाकलयन्तो मुग़लाः देहेषु दष्टाः दुःखासिकादग्धदेहाः आबालवृद्धाः सस्त्रीकाश्च यमसदनं संजग्मुः । सय्यदजलालुद्दीनादीनां संततयः सातत्याभावात् संहार-संहृताः सौभाग्यविच्छित्तिच्छेदमापेदुः । आनन्दपुरानन्दपूरप्लावितपूर्व-पुरुषं गोविन्दगुरुं इम एव जाल्माः दुर्गाद्बहिष्कर्तुं विश्वासघात-मापेदुः । गृञ्जनमूलकमूलच्छिन्नशिरोधराश्च मुग़लाः क्षितौविचेष्ट-मानाः असृक्सरित्प्रवाहान् प्रादुः। विध्वस्तशेषेऽस्मिन् पत्तने हिन्द-वोऽवशिष्टाः वैरागिगौरवमुच्चर्जगुः । फतेहसिंहाश्चर्यचरितमवलोक्य वैरागी तं तत्रस्थं सैन्यशासकं चकार। लोप्त्रमादाय वैरागिवीराः

सरहिन्दमभिजग्मुः। समानाविध्वंसात्प्रागेव वज़ीरख़ानोऽपि चारचक्षुः स्वचक्षुर्भूतैश्चारैः चारयाम्बभूव। समानासीमसु समभिगच्छन्तश्च ते वैरागिवीरवैरविधिं विवित्सवः वैरागिवीरपुरुषैः हस्तगाताः विकर्णनासिकीकृताः वज़ीरख़ानं प्रति प्रेषिताः शास्तुः रोषं शोकं च पर्यवर्धयन्। घुरमग्रामपठाना अपि वैरागिवीरैः विध्वंसिताः। थस्काथानेसर (स्थाण्वीश्वर) शाहबादादयोऽपि विधेयीकृताः वैरागिवीरपौरुषं प्रख्यापयामासुः। बृहत्कायभुशुण्डीद्वययुक्ताश्च मुग़लाः मुस्तफ़ाबादस्थले वैरागिवीरवीरान् विरोद्धुं निरोद्धुं च संनद्धाः बभूवुः। लोप्त्रलुब्धाश्च वैरागिणः पार्ष्णिग्राहाः प्राणत्राणाय परितो विदुद्रुवुः। परं वैरागिवीरैः सोत्साहैः भुशुण्डीद्वयभारोऽपि स्वकौशलेन लघूकृतः मुग़लाश्च कान्दिशीकीकृताः। भुशुण्ड्यौ च हस्तगतीकृते। लोप्त्रलुब्धाः कान्दिशीकाः पुनरपि वैरागिवीरपृतनापार्ष्णिग्राहाः बभूवुः। सधौरासमीपगतः कपूरिग्रामः वैरागिवीरैराक्रान्तः। सधौराग्रामसम्राट् चोस्मानख़ानः लम्पटः ग्रामीणजनगणधनमानजिघृक्षुः स्त्रीसतीत्वभ्रंशयिता ग्रामीणजनगणजुगुप्सितः आसीत्। चतुर्गुणकरदानाक्रान्तिदूनाः हिन्दवः रथ्यास्वेव प्रत्यक्षमुस्मानखानानुचरैः हन्यमानाः गाः विलोक्य 'त्राहि त्राहि' भगवन्! 'त्राहि नः' इति करुणाक्रन्दं क्रन्दन्तः प्रार्थयामासुः। गोघ्नाः गवां गात्राणि हिन्दूनां गृहाणां पुरस्तादेव प्रचिक्षिपुः रुधिरस्रोतांसि च तत्रैव प्रसुस्रुवुः। बीभत्सदर्शनमिदं विज्ञाय वैरागी विगतचेतनोऽपि विधृतवैरचेतनो हिन्दूनां मृतकानपि निखातान् विलोक्य वज्राकृष्टकृतकशाप्रहारोत्तेजित इव मृगारातिः धन्वोद्भ्रान्तमृगानिव पिपासुकान् मुसलमानान् व्याकुलीकृत्य मारयितुं मतिं बबन्ध। बुद्धशाहाख्यश्च पीरः गोविन्दगुरुसाह्यापादनदोषदूषितः उस्मानखानेन भंगानीस्थलयुद्धगतः कृपाणधारीकृतोऽभूत्। वैरागिवीरो न शशाक समाचारमिमं सोढुं नगरमिदञ्च सञ्चक्राम। सर्वकारीयाः सेनाः तस्य पुरो न शेकुः स्थातुं पराजिताश्च ताः पलायिताः। कान्दिशीकाश्च सैनिकाः सय्यदहर्म्येषु शरणागताः परं वैरागिवीरेण पशुमारं मारिताः। कथ्यते यत् नगरवास्तव्याः मुसलमानाः शाहबदरुद्दीनस्य आस्थानमण्डपं प्रविविशुः सम्भाव्यैतद्यत् कृपाणीकृतः सय्यदः दिवंगतस्य गुरोः गोविन्दस्य सखाऽऽसीत् परं शिष्याः न तेषु दयामाकार्षुः। पशुमारंमारणव्यवहारात्स्थलमिदं शूनास्थलं 'कत्लगढ़ो'ति पारस्यभाषापरनामसत्कं इति व्याहृतिं लेभे।

स्थानीयाः सज्जना एव वस्तुतः मुसलमानदुर्जनद्रोहविद्रोहदाहदग्धाः वैरागिवीरसाह्यसमपेक्षिणः हृदयविदारणीं क्रियायिमामकार्षुः । काजी-सय्यदशेखानां क्रूरकर्माणि विलोक्य वैरागिवीरस्तत्रागत आसीत् । तस्यैव संरक्षणमाधायोत्तेजिताः स्थानीयवीराः प्रतीकारप्रवणाः स्वच्छन्दव्यवहारिणश्च पशुमारणक्रियामकार्षुः । छतबनूरस्थलयोरपि मुसलमानाः गोघातकाः बभूवुः तत्कारणादेव ते इष्टिपशुमारं मारिताः । लघुस्थलानीमानि विजित्य वैरागिवीरेण स्वदेशीयानां हृदयानि सोत्साहानि कृतानि । मनोबलोल्लसिताश्च ते सर्वे एव सुखनिःश्वासं निशश्वसिरे । एभिरेव विजयैः बृहद्विजयपद्धतिश्च निर्मिता ।

मालवीयशिष्याणां सम्पर्केण वैरागिवीरस्य पदपद्धतिः सुख-सञ्चारैव जाता । मालवीयाः नेतारस्तस्य प्रशस्तीः समगायन् । वज़ीरख़ानश्च तेषां व्यवहारे व्यवधानमकरोत् । वीतशुल्कशरण-स्थानागारप्रभृतीषु मुख्यानपि स आदिदेश शिष्याणां सुखप्रसरप्रचार-प्रतिबन्धाय । परम् ।

**अकातरास्ते च शश्वत्यैकमूढाः**

**अकान्दिशीकाश्च नयैक लुब्धाः ।**

**सविग्रहाः आसनयानगूढाः**

**सगौरवाः भैरवरागमापुः ॥ ५ ॥**

कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनाश्च ते तीक्ष्णाग्निरसदाः भिक्षुश्रमणभूताः नटनर्तकगायनवादकवाग्जीवनकुशीलव-व्यवसायाः मत्तोन्मत्ताः विविधशिल्पव्यवहारिणश्च व्यापारिवर्ग-समकक्ष्याः सुगुप्तिगुप्ताः चत्वारिंशद्वरणोपायांश्च प्रयुञ्जानाः गूढप्रणिधयोऽपि न गूढ़प्रणिधयो सच्छन्नरूपा अपि स्वच्छन्द-व्यवहारिणः संकटस्था अपि विकटव्यवस्थाः वैररागिणोऽपि वैरागिणः कृतककलहकारिणोऽपि न कामलाः अकमलव्यवहारिणोऽपि सकलमलापहारिणः अकीर्तिकृतां कीर्तिमलनमूढाः मालव्याः शिष्याः किशोरसिंहरामसिंहप्रभृतिप्रमुखपण्याजीवसम्पर्कगताः किरातपुर-सदृशकीर्त्तिपुराख्यं पुरं प्रापुः । स्वागतीकृताश्चात्र ते स्थानीयसज्जनैः मझेलशिष्यसमेताः सौभाग्यमात्मीयं मेनिरे । प्रतीक्षमाणाश्च वैरागि-वीरागमनं चिरायिताः भृशदुःखिताश्च वैरागिवीराय लेखहारकं

प्रैषयन् प्रत्युत्तरञ्च प्राप्य हर्षातिरेकेण व्याकुलितास्ते खरडस्थल-प्राप्त्यादेशमवापुः शतद्रुसरित्तीरोत्तरीयैः दोआबदेशीयैः सम्पृक्ताः मझेलशिष्याः कीर्त्तिपुरान्निष्क्रान्ताः पदात्पदं प्रविसर्पमाणाः वज़ीर-ख़ानाय चिन्ताज्वरं जज्ञिरे अपि चेत्ते वैरागिवीरपृतनासम्पृक्ताः सौभाग्यमस्य दुर्भाग्यप्रायमेव कुर्वन्तु । सम्पर्कमिमं परिहर्तुं सः उपायानुपायुङ्क्त । शेरखानमुहम्मदनामानं च मलेरकोटलावास्तव्यं कार्यमिदं समाधातुमाज्ञप्तवान् । आज्ञप्तिमिमां शिरसि निधाय शेरमुहम्मदखानः ख़िज़रनश्तरवलीमुहम्मदखानैः समेतः शिष्यान् हन्तुं शशकानिव स्वपितृव्यनबीखानमृत्युप्रतीकाराय प्राचलत् । रूपपुरप्राप्ताः शिष्याः शेरमुहम्मदखानेनाक्रामिताः स्वल्पसैन्या अपि सोत्साहाः शरचापहस्ता अपि शिरस्त्राणयुक्ताः प्राणाहुतिदानरक्ताः शेरमुहम्मदखानस्य सैन्ये शलला इव सिंहेषु शरशल्यकभेदेनकुशलाः भुशुण्डीशतघ्नीगुलिकोद्गारानपि निःप्रभानाकार्षुः । असृक्प्रवाहाश्चो-भयोरेवपक्षयोः प्रसुस्रवुः नक्तञ्च स्पल्पावशिष्टाः शिष्याः प्रातः अफ़ग़ानविडालैः मूषिकव्राता इव कवलीकरणायावशिष्टाः इति प्रतीतिः प्रथितिमवाप परं 'प्रभाते दृष्टदोषाणां वैरिणां रजनीभयम्' इति नीतिमाकलय्य शिष्यैः पूर्वोत्तरेभ्यो दिग्विभागेभ्यः वीवधासार-प्रसारसैन्यसमूहाश्च समायोजिताः । प्रातरेवोत्थाय ख़िज़रखानः शिष्यसिंहान् शृगालीभवितुं प्रेरयामास शस्त्रास्त्राणि च प्रतीपीकरणायो-त्तोलयामास परं शरासारवर्षैः शिष्याणां ख़िज़रख़ानो यमधामं प्राप्तवान् । हते नेतरि अफ़ग़ानाः हतोत्साहाः कान्दिशीकाः बभूवः । शेरमुहम्मदख़ानः ससहाय एव नश्तरवलीमुहम्मदाभ्यां सञ्चक्राम । ख़ालसासैन्यैश्च हेतिततितिरोहितकायाः अफ़ग़ानाः नश्तरवली-मुहम्मदखानावपि विगतजीवितौ कारितवन्तः शेरमुहम्मदञ्च क्षतविक्षतकायमवापुः । ख़ालसानां बाहवाबाहविमल्लयुद्धे विजय एव समजायत । कान्दिशीकैश्चाफ़गानैः विसृष्टास्त्रशस्त्राणि च ख़ालसासैनिकैः स्वायत्तीकृत्य व्यवहारविधेयोकृतानि । खरड़-बन्नूरयोर्मध्य एव वैरागिवीरः स्व विजयिसैनिकान् स्वागतीचकार ।

सरहिन्दसम्पराये वैरागिवीरो मतिं चकाङ्क्ष । वज़ीरखानश्चात्र नाममात्रगृहीते वैरागिवीरे विनिद्र एव नेत्रे विस्फार्य निशासु नैव चैतन्यं लेभे । कुतः—

व्रजन्ति ते मूढधियः पराभवम्
गतस्मयाः रोषपरागताः हि ये ।
द्विषद्बलं वीक्ष्य विरक्तचेतसः
कुकर्मभिः सिद्धि पथैकगामिनः ॥ ६ ॥

विप्रलब्धश्च वज़ीरखानः बलाबलं नैव विभाव्य शत्रोः शत्रुं स्वकीयञ्च विज्ञाय मूढम्—

सः फेरुभिः सिंहगतिं विभाव्य
तान्ख़ालसान्प्राह वज़ीरख़ानः ।
पुत्रैः स्वकीयैश्च समेतब्धिः
निर्वासितः सिंहगुरुर्गरिष्ठाः ॥ ७ ॥

पुत्रास्तदीयाः ननु लोभलुब्धाः
शिष्याश्च ये द्रोहरताः निरस्ताः ।
सर्वे समेताः यमधामगत्यै
वैरागरागं ननु धेहि मूढ ! ॥ ८ ॥

शक्तिर्मदीया ननु सिद्धिसत्का
वैरागिनस्ते च तथा विधाः न ।
श्येनैक सौभाग्यगता मदीया
त्वच्चाटकी वृत्तिविनाशयोग्या ॥ ९ ॥

योग्यो भवान्नैव मदीय सैन्यैः
सांग्रामिकं संविहितं विधातुम् ।
सम्राट्समेताश्च वयं गरिष्ठाः
युष्मत्समाः दीनमुखाः धरायाम् ॥ १० ॥

तां भीषिकां नैव ननाम भीतः
सिंहश्च सः गर्जनदीर्णकण्ठः ।
उद्घोषयामास विशालनादैः
गोमायुगम्याः नहि सिंहयोधाः ॥ ११ ॥

सोत्साहमादाय बलं स्वकीयम्
सांग्रामिकीं योगरतिं चिकीर्षुः ।
सैन्यैः स्वकीयैर्ननु नद्धकायः
आयाहि मे योधबलं प्रतीहि ॥ १२ ॥

शब्दैस्तदीयैर्ननु सर्पकल्पैः
दष्टो बभूवास्त निनाददर्शी ।
दन्ती यथाऽऽलानगतो हि विद्धः
मर्माहतो बृंहति दूनचेताः ॥ १३ ॥

योधान्स्वकीयांश्च विलब्धसंज्ञान्
स्वैः सामजैः साध्यगतांश्च काङ्क्ष ।
भौशुण्डिकैः शस्त्रयुतैश्च योधैः
सन्तर्जयामास रणाङ्गणे सः ॥ १४ ॥

बन्दश्च सः बन्धनमाततान
व्यूहैः स्वकीयैश्च विलिप्तमार्गः ।
सः सामजैर्व्यूहगतिं विधाय
मोहम्मदो युद्धरतो बभूव ॥ १५ ॥

व्यूढं हि तद्वीक्ष्य वज़ीरख़ानः
सैन्यं तदीयञ्च समूहसत्कम् ।
उत्तेजितो घूर्णित एव कोपात्
स्वैः स्फोटकैरस्त्रशतैर्जगर्ज ॥ १६ ॥

तां गर्जनां रोषगताश्च सिंहाः
आकर्ण्य सम्भाव्य बभूवुरिद्धाः ।
संरक्तनेत्राः शालभायमानाः
साङ्गारवर्षासु निपेतुरुग्राः ॥ १७ ॥

अथोपपृतनापतिर्बाजसिंहः सिंहान् स्वकान् नष्टसंज्ञान् विभाव्य बन्दासिंहं नेतृत्वमाधापयितुमाजुहाव । निरोधमुक्तश्च योधसिंहः मदमलिन कपोलभित्तिगजसन्निभांस्तान् चपेटाप्रहारैरेव धराशायिनो विधातुं स्वजातीयैरेव सिंहैः समं संपतन् केसरिकिशोर इव क्रियालुः भल्लूकयुवेव मृगयुनासिकालिप्सुः संगरकौटिल्यकुटिलमतिः कौटिल्यकूटैककरणशीलः शौर्यैकैवल्यकर्मठान् श्वापदांस्तान् शस्त्रास्त्रप्रहारैः यमधानीयसदनं संवेशयामास येन वज़ीरख़ान एक एव द्वन्द्वचिकीर्षुः समष्टिगतोऽपि व्यष्टिभावगतः एकवीरः अभिमन्युमन्युवेगव्यपदेशदर्शी चक्रव्यूहकर्मठः कर्मण्येवाधि

कारचिकीर्षुः व्याजैः सहस्रैश्च चतुर्मुखत्वमापन्नः परमेष्ठी हिरण्यकशिपुरिव प्रह्लादधर्षणप्रयासी नरमृगपतिना तेन तथाविधैः भ्रमकैः अन्तरिक्षे भ्रामय्य व्यामोहितो दुर्योधन इव भीमद्वन्द्वे भीमाकारेण वैरागिवीरेण स्वगुरुपुत्रद्वयकुडचीकरणदोषदुष्टः दण्डार्हं अपराधीव समदण्डेन निरयं नायितः। हते वज़ीरखाने निरस्तनायकाः प्रजाः मृतनाथाः स्त्रिय इव विलपन्त्यः "अनेन मम भ्राता हतः अनेन पिता अनेन मम पुत्रः" सकलं जगत् कारुण्यपरं अकार्षुः। प्रतिदिशं कान्दिशीकाश्च जीवितत्राणपरेप्सुकाः मौहम्मदीयाः सैनिकाः सर्वत एव अशिवैः शिवारुतैरेवानुरुध्यमानाः त्रपापरीताः सिंहव्यञ्जनाः श्रृगालाः मतिषु भ्रान्ताः दिशाविभ्रमभ्रान्ता इव मृगाः मृगतृष्णिकावितृप्तपिपासाकाः मोहभ्रान्ता एव प्राणानत्याक्षुः। वज़ीरख़ानस्य पार्थिवशरीरञ्च रज्जुभिर्निबद्धं धर्षितं धरायां रथ्यासु प्रदर्शितं पुनः पुनः पादप्रोतं पक्षिभिर्विलुप्यमानं बीभत्सदर्शनं जुगुप्सासमुन्मुखीभूतं इति जनश्रुतिः। दशाधिकसप्तशताधिकसहस्रतमे खीष्टाब्दे ज्येष्ठारम्भ एव वैरागिवीरसमेताः शिष्यसैनिकाः सरीहन्दान्तर्गताः मुसलमानान् मारयित्वा नगरमोषेण सलोप्त्राः दिवसत्रयमेव तत्क्रियारताः तुरीयेऽह्नि तद्विरामायाज्ञप्तिभिः बाधिताः। पार्श्वस्थग्रामखर्वटाणां लुण्टाकदस्यवोऽपि तत्कदने वैरागिवीर सैन्यसमूहसाद्यदा अभवन्। अनूपकौरनाम्नी कापि ललना मुसलमानैः सापमानमपहृता मृतायदाऽऽत्मवधप्रक्रियया सा नाम निखाता भूमौ शिष्यैः पुनः शवस्थानादेव निष्कासिता हिन्दुधर्मानुरोधगता च पुनः वह्निसात्कृता। नेयं क्रिया शिष्याणां क्रूरा मन्तुं शक्यते। गुरुगोविन्दसुतद्वयशातनोत्साहसाहसकारी सुच्चानन्दः शिष्यैः संगृह्य चित्रवधविधेयीकृतः। तदीया नासिकाऽयोमुद्रिकया प्रोता मुद्रिका च रज्ज्वा छिद्रे स्यूता। तथाविधश्च सः पुररथ्यासु प्रत्यापणं भिक्षाट इव भ्रामितः उपानद्भिश्च पुनः पुनः प्रहृतः सः निश्वासरोधेनासूनेवात्याक्षीत्। भल्लूक इवाकृष्टः सः पशुमारं मारितः परिवारश्चास्य तेनैव विधिना यमलोकविधेयीकृतः। वजीरखानसुच्चानन्दाभ्यामन्यायार्जितं धनं सर्वमेव वैरागिवीरसैनिकैः दस्युभिश्च पुनर्लब्धम्।

सरहिन्दाधिपतिश्च वैरागिवीरः बन्दासिंहः बाजसिंहं स्थानीयराज्यपालं चकार। अलीसिंहश्चास्यसहायकः राज्यपालः कृतः। फ़तेहसिंहः सामानास्थलीया राज्यपालः विनोदसिंहरामसिंहौ च

भ्रातरौ स्थाण्वीश्वरराज्यपालयमलौ परे च हिन्दवः मुसलमानस्थानेषु अधिकृतः नियुक्ताः । वैरागिवीरविजयपताका च सरहिन्ददुर्गाट्टालिकायां उत्तम्भिता । केचिन्मुसलमाना अपि शिष्यधर्मव्यवसायिनो जाताः । दिन्दारखानो दिन्दारसिंहो बभूव मीरनसीरुद्दीनश्च मीरनसीरसिंहरूपमाधात् । वैरागिवीरश्च बन्दासिंहः कतिपयानेव दिवसान् सरहिन्दमध्युवास ।

बन्दासिंहे च तथागतेऽधिपतिपदारूढे सति सर्वत्र सतामेव सम्मानो बभूव न त्वसतां मुसलमानानां प्रत्येव विपक्षताऽभूत् न तु सैन्यशिविरेषु द्रोहभावतोविपक्षता समजायत । वैरागिवीरश्च वैररागरतोऽपि वैराग्यगतो वीराग्रगण्यानामेव गणनां चकार वाराङ्गणागणनाञ्च तिरश्चकार । दीनभीतातुरत्राणपरश्चासौ प्रजाकामकामी सभानां संयोजकः प्रजानामुद्धारकः शक्यमव्यकल्पारम्भी आर्त्तत्राणपरः स्मार्त्तधर्मानुरागी श्रौतकर्माभिभावी धौर्त्यधर्मविरोधी क्षात्रौधर्म इव दुःस्थितः दौरात्म्य घर्षणपरः मार्गेऽग्रभूतः मालेरकोटलारायकोटस्थलवर्त्मविहिताधिपत्यः कृष्णदासनाम्ना वणिजाऽऽतिथ्येन स्वागतीकृतः सौभाग्यसौहित्यसम्पदमापेदे ।

सरहिन्दं प्रत्यावृत्तश्च वैरागी चक्रवर्त्तिसाम्राज्यसम्भावनापेक्षी सर्वस्योत्तरापथस्यैवाधिष्ठाता बभूव । सुरक्षास्थलाभावात् सरहिन्दस्य वैरागी नगरमिदं न राजधानीत्वमापादयत् तत्स्थाने च मुख़िलस्पुरमेव नाह्लसधौरान्तर्गतं हिमप्रस्थदुर्गस्थलं तत्पदं सः प्रादात् । नवयोगयोजितञ्च दुर्गमत्र सारलोहेन दृढीकृतं लोहगढदुर्गाभिख्यां लेभे । वीतशुल्कवाधकर्मसु लभ्यानि धनानि कोशाः वाहनानि सायुधानि लोहदुर्गगतान्येव संरक्षितानि । हिमप्रस्थस्थितमपि दुर्गमिदं सामजसमाजसम्भृतं शतघ्नीसहस्रसंसर्गितं वप्रप्राकारगोपुरयुतं परिखापरिकरितं सम्भावितसम्परायसापेक्ष्यमेव कृतम् । सम्राट् बुभूषुश्च वैरागिबन्दः नानकगोविन्दगुर्वोः स्मारकाधारकल्पां मुद्रामेकां प्रणिनाय तयोः प्रशस्तिवर्णोत्कीर्णेयं सुतरां वीररसप्रचुरा नामाङ्किता च सुतरां प्रशस्ततरी बभूव । शासकीया मुद्रणाज्ञप्तिरपि तेन तथाविधा सम्पादिता स्थालीकरवालचित्रार्पिता ।

संविधानसम्पादना तु वैरागिबन्दस्य न स्पष्टतरा । भूस्वामित्वमेव तेन विलोपितम् । शिष्या एवानेनोद्वेजिताः । परं औचित्याधिकाराश्च

तेभ्यस्तेन समायोजिताः । राज्यविस्तारमिच्छन् वैरागिवीरः सहारनपुरस्थलं प्रति पदवृद्धिमकरोत् देवबन्धस्थलीयाः वास्तव्याः शिष्यधर्मानुयायिनोऽभवन् । जलालखानस्तत्रत्यः स्वामी तान् सर्वानेव वन्दीचकार सन्तापदानाय चाज्ञप्तवान् । कपूरसिंहनामा च शिष्यः शिष्यग्रन्थी वैरागिवोरं साह्यदानाय शिष्यसंघपरित्राणाय च प्रेरितवान् । वैरागिवीरश्च तन्निशम्य सहारनपुरपुरं प्रति प्राचलत् इष्टकाचयतां चेदं निनाय नजीबाबाद जलालाबादनवाबयोः पूर्व एव सन्धित्सुरभवत् अपरश्च युयुत्सुकः । जलालाबादयात्री वैरागिबन्दः बेहूताम्बेताना उन्ताःस्थलान्यात्मसादकरोत् । बेहूतस्थलीयाः पीरजादाः गोघातकाः वैरागिबन्दस्यप्रतिकारविधेयीभूताः । नाउन्ता-धनुर्धरैः सह वैरागिबन्दस्य साम्मुखीनः सम्परायोऽभूत् । लोप्त्रसमेतः वैरागिवीरः जजालाबादगतः जलालखानं सिंहानां मुक्तये प्रादिदेश-जलालखानश्च प्रत्यवदत्—

कातराः येऽप्यशक्ताः हि नोत्साहस्तेषु जायते ।
प्रायशस्तु नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ॥ १९ ॥

प्रोत्तेजिताश्चात्र भट्टास्तदीयाः
यावानुपाताश्च गतिं प्रपन्नाः ।
सैन्यैः स्वकीयैश्च युयुत्समानाः
दुर्गं तदीयं ननु रुद्धवन्तः ॥ २० ॥

रुद्धाः विपक्षीय पठानयोधाः
सोत्साहमुत्तेजितवृत्तियुक्ताः ।
दुर्भाग्यमात्मीयमधिश्रयन्तः
सोन्मादविश्वासहताः बभूवुः ॥ २१ ॥

परमहो ! भाग्यगतिर्गरिष्ठा जाता बलिष्ठा च बाधैकलीना सा प्रकृतिः कोपमुवाद रुष्टा दुर्गं हि तत् पर्वतैक विविक्तं वैरागिसैन्यैश्च दुरारोह्यमभवत् तथापि सौभाग्यगतिर्न नष्टा नष्टाः पठानाश्च पराजितास्ते कृष्णासरित्तावत्परीवाहपूर्णा सैन्यं तदीयं वृद्धेररुणन्नु ।

इति डा० सुदर्शनशर्मणा विरचिते वीरवैरागिचरिते
तृतीय उच्छ्वासः ॥

# अथ चतुर्थ उच्छ्वासः

पुंसो जगत्यां नहि तोषभावः
रोषारुणो वैभवमाजुहोति ।
ऐश्वर्यमेतच्चलभङ्गुरं सत्
यात्यागतं चक्रविधानवृत्या ॥ १ ॥

साफल्यमाधाय भवं बिभर्ति
भाग्यप्रहारेण निरस्तसिद्धिः ।
कूर्दकयोर्बन्धस्य धुरं प्रपन्नः
मर्माहतः कष्टगतो विनष्टः ॥ २ ॥

जलालाबाददुर्गात् पयः पूरैः परास्तः पुमान् वैरिजनवैभव-लोप्त्रव्याप्तिविस्तृतवृत्तीकः मालवलक्ष्मीलतापरशुभावार्जनाय दोआब-देशघर्षणाय लब्धोत्साहः शिष्यसंघसमुदयसौभाग्यापेक्षिजनसामान्य-प्रशस्तिपात्रभूतः मुग़लसाम्राज्योत्सादनप्रत्याशी स्वसाह्यसंघसंवलितः पञ्चापराज्यं शिष्यराज्यमेवैकच्छत्रसाम्राज्यकल्पकं चिकीर्षुः शिष्यसंघ समितिं समायोजयाञ्चक्रे । शिष्यराज्यतीर्थाश्च प्रतिग्राममटन्तः धनधान्यवीवधासारप्रसारप्रतिपादनाय प्रायतन्त । अमृतसरस्थल-गताश्चते बृहतीं सभामायोजयन् बटालाकलानौर गताश्चते ग्रामानन्तरं ग्राममाक्रान्तवन्तः । स्थलद्वयमिदं स्वायत्तीकृत्य तैः लोप्त्रभाराः हस्तीकृताः ।

बटालातो लवपुरं प्रचलिताः सिंहाः यवनान् हन्तुं हरिणानिव क्ष्वेडाबहुलाः पठानकोटाधिपतीभूताः गोमायुहृदयं सय्यदस्लमखानोपरि कलविङ्कोपरि श्येना इव वियतोऽवपातान् विदधानाः तथा निपेतुर्यथा नाम लवपुरवास्तव्याः एकचित्तीभूताः हैदरीपताकाधोगताः समरभेरीं नेदुः । गोमायुगौरवश्चास्लमख़ानः सिंहनादेभ्य एव हतोत्साहः सन्त्रासविध्वस्त विचारवृत्तिः किंकर्त्तव्यविमूढ इव नपुंसकः मनोविकार-मुपरिष्ठादेव गोपायमानः चिल्लामुखात्परिभ्रश्य मार्जारमुखागति-

मनुभवन् प्रकाशप्रयाणभूमावागन्तुमपि यदा नोत्साहमकरोत् तदैव तदीय कातरत्वं निगूहितु कामाः मुल्लाह काज़ीवर्याः धर्म संरक्षकव्यवहार व्याजविधाविधानशीलाः आबालवृद्धं समर्थजनं सैन्यदलपरियोजनाय प्राचोदयन्। मुसलमानविद्वेषदष्टाश्च हिन्दुजनाः तथैव येतिरे यथा देशोदास्यशृङ्खलाभिर्न संयोज्यताम्। चतुर्धाविभक्ताश्च शिष्याः चतुरङ्गबलसमुदयं संविदानाः लवपुरं केन्द्रविन्दुं विधाय भरताभिधग्राम वास्तव्यग्रामाक्षपटलिकदायदत्तं दुर्गं चतुर्द्वारमग्निगृहकल्पं विचार्य शत्रुसंहारविधानशीलाः प्राणपणेनापि भूभारती संरक्षणकृतप्रतिश्रुतयोऽहर्निशं वीवधासारप्रसारप्रतीक्षणपराः शत्रुयोधयुद्धघस्मरा इव श्वापदाः नीतोरपि नयन्तः तथा संमिलिताः यथा नाम न कोऽपि तेषां युगान्तरेषु गर्हणां कथायितुं पारयति। शत्रवोऽपि दान प्रतीक्षाः आसनमादधानाः दुर्गंपरिवारयन्तः मौहम्मदनामधेय जयकारान् कथयन्तः 'जेहाद' भाव माकारयन्तः आक्रोशैर्विक्रोशमानाः स्वाश्वद्विपपदातीन् तथा व्यधापयन् लवपुरामृतसरगुरुदासपुरान्तर्गतं रियार्कीकन्धीग्राम पटलमधिष्ठाय शिष्यगणाः सैन्यदलैः स्वकीयैः भगवान्नायदुर्गगताः मुसलमानैः परित आक्रान्ताः हैदरीकेतुश्चात्रागतः। सैन्यद्वयस्य गुलिकास्त्रवृष्टि प्रहारास्तथाविधा अभवन् यथा नाम शवा एव शयानाः भूतधात्रीक्रोडभूषाभूताः बीभत्साकारमेव दृश्यं प्रास्तुवन्। रक्तरञ्जिता च भूरसृक्प्रस्रविणीव प्रातीयत। शिष्याश्च तद्दुर्गान्निःसृत्य शत्रुसंघ प्राकारान् प्रस्फोटयन्तः निमिषमात्रेणैव दुष्प्रापा अभवन्। दुर्ज्ञेयव्यवहाराश्च सन्तः ते तेभ्यः कान्दिशीकेभ्यः कदर्थ्याः अभवन्। कदर्पताश्च कदर्यहतकास्तान् मन्य मानास्ते हिन्दूंश्च तर्जयन्तो निराकुर्वाणाः स्वप्रशासकमपि कदर्थयितुमारब्धाः।

संज्ञातसाराश्च समेतवीराः
शिष्याः शिखाबद्धगताश्च रोषम्।
सिंहास्यदंष्ट्रालमुदारवेशम्
सन्धाय सङ्ग्रामरताः बभूवुः ॥ ३ ॥

रुद्धाश्चते दुर्गगताः सुधीराः
शस्त्रास्त्रगोलैश्च हतान्विरुद्धान्।
तान् शत्रुयोधांश्च निरोधमुक्तान्
सर्पानिवाभास्य गताः हि तोषम् ॥ ४ ॥

कोटलाबेगमस्थले च लवपुरनेदीयो भागे सैन्यद्वितयं सांमुख्यगतम् । शिष्यवीराश्च मृगादना इव क्रव्यादनांस्तान् निहन्तुं पतत्रिषु श्येना इव तथा निपेतुर्यथा नाम नामावशेषोऽपि न तेषां लब्धुमशक्यत ।

जालन्धरदोआबगताश्च शिष्याः स्वल्पफलेनैव सन्तुष्टाः विश्वस्ताश्च स्थलीयप्रशासकशमसखानं नन्तुमेव समदिक्षन् । शमसखानश्च नीतिपटुः पटीयानपि संग्रामरागे नेदिष्ठोऽपि दोर्दमनभावे दौरात्म्यकौशलप्रकाशे दविष्ठोऽभूत् सीसकचूर्णपुञ्जप्रसेवकांश्च शिष्येभ्यः सम्प्रेष्य सन्धित्सुरपि विग्रहगरीयान् सममेव सैन्यसमवायैः गुप्तिगतान् गुप्तभागान् दलैः संनिरोध्य वृकवृत्तिगूढान् स्वकीयान् पृतनापतीन् समुरजवाद्यनादः शिष्यसैन्यमाक्रान्तुं समप्रेरयत् । सम्प्रेरिताश्च ते शिष्यैरपि सोत्साहमुत्प्लुत्योत्प्लुत्य सभेरीनादं अन्तरिक्ष एव गुलिकास्त्रमोक्षैः सन्तोलिताः सविस्मया इव शत्रुबलसौष्ठवं प्राशंसिषुः याने भग्नाशाश्च सन्धिपरिहारजुषाः आसनमपेक्षमाणाः द्वैधोभावोद्भावनसापेक्ष्याः सुरक्षितस्थलेष्वेव संश्रयमाचक्रुः । वैरागिवीरोऽप्यत्रागतः सुल्तानपुरराहोंस्थलवास्तव्य एव शत्रुसंधैककालनिमित्तोभूय वप्रप्राकारप्रतोलीगतान् खातोत्खातपरिखापरिवेशांश्च दलैः स्वकीयैः परिपूर्य शत्रुसंक्रान्तिमप्रेक्षमाणाः स्वसैन्यसंधान् सतर्कांश्चकार । शमसखानोऽपि शत्रुपक्षमभिभाविनं गत्वा संग्रामगीतिं व्यरमयत् दशोत्तरसप्तदशशतमे ख्रीष्टाब्देऽक्टूबरमासस्यैकादशेऽहनि राहोंसंघर्षः समजायत तद्गतश्च शिष्यविजयः बहादुरशाहसम्राजे पञ्चविंशतिम्यां तारिकायामेव सन्देशितः ।

विद्रोहदाहज्वरदग्धश्च सम्राट् शिष्यसंघसङ्घर्षदावशान्तये अशान्तचेताः मुहम्मदकरीबख्शाख्यानुजबिद्राणविहिततोषः दायाद्यविद्रोहधृतदोषहेतुविज्ञानलुब्धांश्च विरोधविद्रधिदूषितदेहांश्च दस्युभूतान् अरूढमूलान् प्रकृतिपुरुषांश्च धर्षयितुकामः सः बहादुरशाहः बाह्यान्तःकोपक्लृप्तिकलुषितदण्डव्यवहारश्च पञ्चापप्रान्तान्तर्गतशिष्यगणगौरवगानगाथाभिश्च दूनचेताः मुग़लसाम्राज्यमूलोत्पातकार्याणि च पूर्वानुमानेन विचिकित्समानः मनोविकारमात्मीयं च निगूढं विदधानः स्वकार्यभारलघूकरणाय स्वकीयसचिवं मुनीमखानमेव द्विषद्द्वेषापहारायानुयोजयन् बन्दाबहादुरस्य जीवग्राहं ग्रहणाय च प्रेरयन् शिष्याणां पुरस्तात् चाग्रगतिं निरादरमेवाकलयन् शोषणविधितोष एव संरमयाञ्चकार ।

सरहिन्दादि शिष्यग्राहगृहीतगोध्रगर्हणा विगृहीतान् प्रदेशांश्च पुनर्लब्धुं अख्तरखानाधिपत्यगतान् द्वादशसहस्रसम्मितांश्च सैनिकान् स्वकीयगौरवपुनरावर्तनाय प्राहिणोत् । सहस्रशो मौहम्मदीयाः तैः सम्मिलिताः सैन्यदलानि संवर्धयामासुः । स्थाण्वीश्वरतारावलीमध्यगतेषु स्थलेषु अमीनाबादादिषु तदीय सैन्यानां संग्रामाः समभवन् । पराजिताश्च शिष्याः अग्रे गताः शाहबादस्थलेऽपि वैरागिवीराभावात् स्वशिष्याणां पराजयपरिध्वस्तचेताश्च वैरागिवीरः पुनरपि प्रत्यागतः स्वबलेषु नवजीवन सञ्चारमकरोत् ।

श्वगणिनां समवायैः संगृहीतांश्च मुग्ध हरिणान् स्वकीयान् पराजयध्वंसबद्धान् सैनिकान् द्विषद्ग्राहनिग्रहनिरर्गलीकरणाय वैरागिवीरः लौहगढ़ दुर्गगतः यानात्प्रागेवासन समाविष्टः बहादुरशाहनिग्रहं चापेक्षमाणः सुतरां साहसमधत्त । सधौरागतश्च सम्राट् असद्खाननेतृत्वेऽनीकिनीं नियोज्य मुअज्जमकुमारमपि तत्सविधे संयोज्य वैरागिवीरं जीवग्राहग्रहणायादिदेश। दुर्गगृताश्च शिष्याः साम्राज्यसैन्यैः इष्टिपशुमारं मारिताः साहसं परित्यज्य पलायिताः। वीवधासारप्रसाराभावादेव पुनरपि योद्धुमसमर्थास्ते दीवानहरिदयालुदत्तैक्षीयैरपि विद्विड्विनाशाय नैव सामर्थ्यं गताः। वैरागिवीरविनाशमपेक्षमाणो गुलाबसिंहाभिधो विहितात्मत्यागो बलीयानपि निरवलम्बः सैन्ययोधः वैरागिवीरसमाकार प्रकारः तदीयनेपथ्यपरिगतः सैन्यनेतृत्वमाधातुं मतिञ्चकार । वैरागिवीरञ्च सः सुदूरहिमाद्रिषु शरणप्राप्तये प्राचोदयत् प्रथमतस्तु वैरागिवीरः कातरत्वकलङ्कभीतः तदीयात्मत्यागसाहसं निराकरोत् परं बारम्बारं बाध्यमानश्च तेन स्वीचकार सः प्रार्थनां सुगूढस्थलं च हिमाद्रियादेषु न्यवीविशत्। बन्दीकृतो गुलाबसिंहः गुलाबसिंहो न तु वैरागिवीरः इति परिचितः श्वगणिनां क्रकचदारितः स्वसहायैरेव चर्मावलुञ्चं लुञ्चितः पञ्चत्वमगात् ।

वैरागिवीरासूनसुरक्षितान्विभाव्यैव गुलाबसिंहः वैरीविशसनबलीभूत इति त्यागमहिमाऽस्य सैनिकस्य दिक्षु विचचार। वैरागिवीरं चाक्षतकायं श्रुत्वा वीराः सर्वेऽपि सुविहितसाहसाः पुनरपि विजयापेक्षिणः वैरागिवीरनेतृत्वे योद्धुं प्रवृत्तिमुदतम्भयन्। वैरागिवीरोऽपि गुलाबसिंहत्यागेन पुनरुज्जीवित इव साहसेनोत्ताम्यन् जौनपुरखालसादलसहयोगमवाप्य पुनरपि समराङ्गणे रणभेरीमुन्नादितां चकार ।

शिवालिकगिरिकूटस्थांश्च विद्रोहिसामन्तान् दण्डयितुं पुनरपि प्राचलत्। कहलूरसामन्तो भीमचन्द्र एव वैरागिवीरस्य रोषदोषनिषण्णो जातः कुतो विभ्रमभ्रान्तो हि वैरागिवीरो यदसौ गोविन्दगुरोः प्रगतौ वैरीपक्षगतो विपक्षभूतो विद्रुग्धः देशं स्वकीयमेवसम्मानसोपानादधरीचकार। विलासपुरदुर्गविधेयीभूतश्च भीमचन्द्रः जालन्धरक्षेत्रसामन्तसहितः सर्वांश्च पर्वतकीयानपि सामन्तान् एकत्रीकृत्य रक्षाहेतोः पार्वतीनां चमूनां यमपि पुरुषार्थं कृतवान् विभ्रमभ्रान्तो वैरागिवीरस्तमेव स्वावेशदोषेण विफलीचकार भीमचन्द्रप्रमुखसामन्तराजकसहयोगमपोह्य सः स्वसैन्यदलैः बिलासपुरदुर्गमेवेष्टकाचयतां निनाय। गिरिदुर्गगताश्च केसरिणः सकिशोरा एवेष्टिपशुमारं मारिताः मृतकायसमवायसमवेताः सक्रोष्टृविक्रोशं विलुप्यमानाः सपूतिगन्धं शतद्रुसरित्प्रवाहपूरमेव व्यानशिरे। वैरागिवीरश्च स्वविजयपताकां गिरिदुर्गगतां कारयित्वा सौभाग्यमात्मीयं सुभगं मन्यमानः नैतद्विममर्श यत्स्वकीयसामन्तसौहार्दमोषंमोषं विदेशिवैरीदोर्दण्डदीर्घीकारं कारं स्वदेशस्य विदेशविधेयत्वमेव भविष्ये निश्चप्रचम्। भीमचन्द्रपराजयपरिश्रस्ताश्च पर्वतीयाः सामन्ताः वैरागिवीराय करदीकृता बभूवुः। केचिदुपरोधं परिहरन्तः प्राणमन् पुरस्तात्। केचित् शिविरमस्य समागत्य सैन्यदलसदस्यीभूताः श्रद्धालवः शत्रुसमुदाय समुदयसंरोधाय प्रतिश्रुतवन्तः। सोपहाराश्च सोपधिविहितान् चरांश्चेष्टिपशुमारममारयन्तः वैरागिवीरयशः पताकां प्रास्फारयन्। मण्डीशास्ता च सिद्धसाईं - सामन्तराजः करदीकृतराजसु सर्वश्रेष्ठः नानकगोविन्दगुरुद्वयदर्शनप्राग्रहरः वैरागिवीराय निष्कारणविधेयीभूतः सर्वकालं सहयोगदानाय प्रतिज्ञातवान्। सः वैरागिवीराय चित्रदुष्करकरणकल्पं कल्पशास्त्रग्रन्थमपि समर्पितवान्। कुलूतराजेन सहितो वैरागिवीरश्चित्रदुष्करकरणसमुदायमभ्यस्यन् कुलूतराजस्य छद्मकरणस्याधारभूतः कालायसपञ्जरविनिवेशितः तन्त्रावशुद्धये परिकल्प्यमानः सोपधि तन्त्रयुक्तिकल्पनाध्ययनव्यपदेशविधेयीकृतः कुलूतराजद्वेषदूषितः पञ्जरविनिवेशितः बन्धनबद्ध इव पाटच्चरः देशद्रोहिराजस्य कूलूतराजस्य कूटयोगयोजितः बहादुरशाहबन्दीग्राहमेवापेक्षमाणः प्रत्युत्पन्नमतित्वात् द्रोहिद्वेष्यद्विषद्विघाताय प्रतिजानानः कुशीलवकुलकर्मक्रियालुः पञ्जरद्वारोद्घाटनयुक्तियोग-सन्धान श्रद्धालुः कुलूतराजचक्रव्यूहभङ्गं च विद्यायाभिमन्युरिव कौरवकुलकलङ्की परिवारपरिधपरिवेष्टितः

परमवीरचक्रचङ्क्रमणचुञ्चुचारचक्षुश्च सदाचारचञ्चुरचितकिर्मीर-कर्मठः कर्मणे मार्जार इव प्रसरेण मृग-इव ग्रहालुञ्चने श्येन इव, सुप्तासुप्तमनुष्यवीर्यतुलनेश्वेव, सर्पणे पन्नग इव, रूपशरीरवेशरचने मायेव स्थलेऽश्व इव जले च तरणिरिव परितो प्रविसर्पमाणः सुकेत-मण्डीधामगतः शरण्यशरणमुपगतः शरण्यशरप्रहारसव्यपेक्षी चम्बा-गिरिगह्वरगतस्थलवर्त्मनि वर्त्तमानः इरावतीसरित्तितीर्षुः उद्धलसिंह-सामन्तशङ्कास्पदीभूतः दूतामात्यप्रश्नोकृतोऽपि पाषाणप्लवतरणितरण-तीव्रतरः तेजः तरस्विताक्ष्यंवाहन इव रुक्मिणीस्वयंवर-श्रद्धालुरुद्धल-राजप्रश्रयप्रस्तावप्रोत्साहितः श्रद्धेयश्रद्धालुश्रद्दधतां प्रणयप्राग्भारफेन प्रस्फुरित वपुष्कः सविश्रम्भालापलम्पटः सृक्कणी लेलिहानः वैरिविरोध-रोधनायेरावतो रोधोरिरक्षया रम्भोर्वशीरमणोयक्ष्मातलोर्वशी-विशेषश्रृङ्गारलास्य लालित्यः लोभोपहतचेतसां रक्षोगणसन्निभान् यवनान् युद्धयज्ञपशूनिवेष्टिमारणक्रियाकर्मठोबभूषुः सौविदल्लदल-दलितदोहली द्विषद्दलनदोहदराधनकण्डूतिकण्डितकायः कुलीनकुल-पुत्रकुलकर्मकथितविक्रमवैभवः तत्त्वान्वेषी गवेषक इव ग्रामान्तराणि गाहमानो जम्बूदेशयात्री ययौ यानयुक्तः ।

जम्बूगतो वीर्यविभावसूभिः
संतप्यमानः सुधियां विनेता ।
सामन्तराजेन विरोधितोऽभ्-
त्सैन्यैः स्वकीयैर्विजयं जगाम ।। ५ ।।

तत्रस्थितो दक्षिणदिग्विभागे
विश्रम्य सौभाग्यगते क्षणे सः ।
दाम्पत्यमोहैकरतेः प्रतीकम्
प्रष्ठं स्वकीयं हि सुतं प्रजज्ञे ।। ६ ।।

जितारिषड्वर्गनयेन मानवीम्
अगम्यरूपां पदवीं प्रपित्सुकः ।
सुकर्मकर्मा धृतधर्मवर्धनः
चकारसंज्ञामजिताभिधेयिनीम् ।। ७ ।।

क्षत्रियक्षेत्रीयां साहिबकौरनाम्नीं भार्यां द्वितीयामुपयम्य वजीराबाद-गतो वैरागिवीरो रणजितसिंहनामधेयमपरं सुतमपि जज्ञे । लघुकाल-

मेवावस्थाय पर्वतीय प्रदेशेऽस्मिन् प्रतिष्ठानकूट पुरमभिव्याप्य वैरागिवीरो जम्बूद्वीपराज्यशासकबाजिदखानमभ्यमीन: तदीयापत्यपुत्रेण शमसखाननाम्नापि द्वन्द्वभावमापादित: गुरुदासपुरविषये बहरामपुर-नगरगत: भयंकरसंग्राममंयत मध्यमंग्य घोरप्रचार कान्तारमभि-लीन: आसन गुणमधिष्ठायय्यानाभिमुखो वियर्दविधिस्मृशति शौर्यमर्षितमु: वैरीरुधिर पिपासुरिव सृक्कणी लेलिहान: क्षुत्क्षामकण्ठसिंह इवोत्पतिष्णु: सर्वत एवेषुप्रहारान् तथा मुमुचे यथा नाम कोटर इव चीत्कुर्वाणा: यवनहतका: हताहता: दिक्षु निपेतु: शमसखानोऽपि निहत: बाजिदखानश्च क्षतविक्षत: सजातीयै: सममेव रणभूमौ निकृत्तकाय: रायपुर श्मशान निखातो नामशेषतां लेभे ।

प्रोत्तेजितश्चाप्यवरङ्गजीव:
बहरामयुद्धैकदनं निशम्य ।
मन्त्राहित: सर्प इवोत्फण: स:
फूत्कर्तुमारेभ इतीति वृत्त: ॥ ८ ॥

धनेषणाविहितमोहश्च वैरागिवीर: कलानौराचलपतनयोर्वर्तमान: मुगलसाम्राज्यसमृद्धिपेशलयो: स्थलयो: सौभाग्यमात्मीयमनिमेषमान: यथेष्टमादाय धनान्युपकरणानि च लवपुराभिमुख: सविध एव सति सम्राजि इरावतीसरितमुत्तीर्य रचनादोआबगतो जम्बूगिरिगह्वरगतानेव प्रदेशान् प्रविवेश । मुहम्मदामीनखान अघरखानरुस्तमदिलखानसैन्य-नायकत्रयेणतिसृभ्योदिग्भ्य एवाक्रम्यमाणोऽपि वैरागिवीर: नीतिशौर्य-सम्मिश्रणाश्रय: गिरिदुर्गकन्दराश्चोल्लंघयन् प्रतिमुख त एवाभिप्लुत्य सैन्यदलै: स्वकीयै: नायकत्रयदलघर्षणक्रिया तथा समारब्धा यथा नाम ध्वस्तोत्साह: रुस्तमदलखान: परोलकठूआग्रामगतवास्तव्यानेव पेष्टुमाचक्राम सहस्रशश्च गावो हता: स्त्रीपुरुषाणां नु का कथा ।

एकादशाधिकसप्तशताधिकसहस्रतमे ख्रीष्टाब्देऽगस्तमासे बहादुर-शाह सम्राट्लवपुरेविराजमानो न दुर्गनिवेशमादधे प्रत्युत् इरावती कूलकल्माषितेऽज्वलग्रामपरिसरे शिविरमास्थाय वैरीवैरनिर्यातन निध्याननिष्ठ एवासनगत: यानापेक्षी शस्त्रास्त्र परिवेश विहित विशङ्कट-यन्त्रयानागार: दिवानिशं सामन्त समुदायसंस्कार संविग्नचेता: कान्दिशीकं रुस्तमदिलखानं स्वसमक्षमेव प्रस्तोतुमियेष । निशि निकषागतं च तं सनिमड़पादं बन्दीग्राहग्रहणायादिदेश । सर्वामस्य स्वकीयां सम्पदं स: राजकीयमृक्थरुगां चकार । परम्--

प्रजास्वविनयाधानात्
रक्षाभावाच्च ताडनात् ।
सोऽभूदत्रोपजीविभ्यो
धर्षणीयोऽधिकारिभिः ॥ ९ ॥

म्लेच्छैकराज्यस्य विचारकारो
विद्वज्जनानां च विनाशकर्त्ता ।
सोऽभूच्च पुण्यैकविधानहर्त्ता
निश्वासनिर्ह्रास निविष्टसंज्ञः ॥ १० ॥

माघेन विघ्नितोत्साहः सम्राट् बहादुरशाहोऽष्टादशशतके द्वादशे
ार्षे जराजीर्णकायो रुग्णः विसंज्ञ इव दुःखितः फाल्गुण प्रारम्भ एव
ामधामातिथिर्बभूव ।

दिवंगते सम्राजि सुतास्तदीयाः राज्यारोहणयुद्धयोजिताः वैरागि-
ोर सैन्य सौभाग्य सौहित्य संसेवकाः अभूवन् । निहतोऽजीमुश्शानः
ाम्राड्भूतश्च जहांदार शाहः । परम्—

अचिराधिष्ठितो राज्ये
शत्रुष्वाहित वैभवः ।
कोपितैः राज्यसामन्तैः
कोपितो हि विनश्यति ॥ ११ ॥

फर्रुखसियाराभिधश्चाजीमुश्शानसुतः पितृवधप्रतिशोधविशेष-
द्विष्टः क्रूरकर्माणं जहांदारशाहं पराजित्य शिरःछेदं चास्य विधाय
ाम्राट्पदमधिरूढः ।

गिरिदुर्गगतश्च वैरागिवीरः स्वोपशयादुत्थाय व्याघ्रविनिर्गतो
ेसरीव क्ष्वेडानिर्भरः परिवार परिकरितः परितो हन्तु शृगालकल्पान्
ात्रून् स्वसीमस्वेव संप्रवृत्तः किशोरद्वयोपेतः सिंहोद्वयोपभुक्ते मोह-
ग्रस्तव: सधोरास्थलमाक्रम्य स्वकीयां श्रयणस्थलीं लोहगढ़प्रमुखीं
ाधाय राजधानीं शिष्यराज्यसम्राड्भूतो बभ्राम सुखसम्पदा ।
ाहान्दारशाहाभिषेके कृते मुहम्मदामीन खानो वैरागिवीरगतिरोधाय
चोदितः सरहिन्दसैन्यगोप्तारं जनुद्दीनहैमदखानं स्वोपसैन्यपतिम-
ध्य । देहलोलवपुरीयाः पृतनाव्यूहा अपि प्रत्यूहनाय प्रेरिताः ।

सधौरास्थले च दुर्गमेकं निर्माप्य वैरागिवीरः शत्रूणां बाधाः सनिर्बन्ध-मेवोत्तीर्यार्त्तिवान्युपभुञ्जानः फलानि प्रकृतेः तेजस्तिग्मतामपि सहमानः निर्बाधगत्या सर्वत एवास्त्रमोक्षान् कुर्वाणः मुसलमानानां धैर्यं बभञ्ज। धैर्ये भग्नाश्च ते प्रकाशयुद्धपराङ्मुखीनाः दुर्गं परितः परिखाः परिवेश्य भूगर्भप्रणालीश्च निर्माप्यबृहत्कायनालीयन्त्रं च निधाय तथा नाम गुलिकास्त्रवर्षामकुर्वन् यथा नाम वैरागिवीरवीराः भग्नाशाः नालीयन्त्रमेव निराधारीकर्तुं प्रयस्यन्तः पातालान्तर्गताः नालीयन्त्ररज्जुगुणमेव श्लथीकर्त्तुं पारयन्तः सौभाग्यमात्मीय-मेवालभन्त ।

विक्षुब्धः फ़र्रूख़सियारः लवपुरराज्यपालमेव पदच्युतञ्चकार। ज़बरदस्त ख़ानश्च पदच्युतः अब्दुस्समदखानमुत्तराधिकारिणमलब्ध। ज़ाकिर्यख़ानश्च जम्बूसैन्यगोप्ता बभूव । उभावेव वैरागिवीर-विनाशायादिष्टौ। शासकीयसैन्यैः सर्वतो निरुद्धाः शिष्यवीराः दुर्गा-न्निष्क्रान्ताः त्रयोदशाधिकसप्तशताधिकसहस्रतमीये ख्रीष्टाब्देऽक्टूबर-मासे मुसलमानानिष्टिपशुमारं मारयन्तः लोहगढ़गतं वैरागिवीरं परित्रातुमुग्ररूपाः परितो वर्धमानाः पराजयं नैव प्राप्नुवन् वैरागि-वीरश्च यानायासनमपेक्षमाणः उपेक्ष्य शत्रुसंघातं पर्वतदुर्गाण्येव संश्रित्य सैन्यं स्वकीयं संवर्धयामास। सधौरालोहगढ़दुर्गद्वय स्वामित्व-मभिज्ञाय सम्राट् सुतरां सोल्लासः उत्ताम्यमानश्च पुरस्कारैरुपहारैश्च स्वसैन्य पतीन् समलञ्चकार। लवपुरप्राप्तः समदख़ानः सम्राजा सभाजितः मुलतानं प्रस्थितः। चतुर्दशाधिकसप्तशताधिकसहस्रतमेऽब्दे मार्चमासस्य षष्ठयां तारिकायां राजपुत्राधिष्ठानं प्रदेशं प्रतिप्रचलितः।

सम्राड्विजयमपेक्षमाणाः पठानाः सर्वत्र जगत्यां जघन्यकर्माणि कर्त्तुं प्रोत्तेजिताः शिष्यसंघप्रतर्दनप्रायप्रतिज्ञाप्रवणाः प्रतिक्षणं प्रतिपदं च वैरागिवीरवीरविनाशधृतप्रणाः व्रणाङ्कितहेतिततितर्जनतरस्विनः तूर्णतरतुरगघटाघटितव्यूहरचनाः परिवार्य पिषन्तः पशूनिवासृक्पूर-प्लवतरणीयं जगत्सर्वं चिकीर्षन्तः चक्रव्यूहरचनारेचकाचरणचुञ्चवः चारचुञ्चुभिः चाटचेटैः चटचटायमानाः चेटिचाटूक्तिसञ्चार्यमाणाः जङ्गमाः प्लवङ्गा इव परितः प्रनृत्तपेशलाः चारभटनाटकनाट्यनटा इव नर्त्यमानाः नृपशुभिः स्वकीयैः मदलालसा अपि मद्यालसाः मोहविक्लवतामवापुः। जगत्सिंहाभिधं शिष्याधिपतिमभिधाय सेनापतिं शिष्याः शौर्यं श्रयन्तः श्रियमावितेनुः।

पठानानां दुर्गमाक्रम्य शिष्याः तथा नाम प्राहरन् यथा नाम प्रतीपं प्रहृता अपि ते न पराजयमाप्नुवन् । मुहम्मद—इशगश्च पठानोहतः । ग्रामीणैः संग्राहिताः स्वापतेयाः शिष्यैः स्वायत्तीकृताः । चतुर्दशाधिकसप्तशताधिक सहस्रतमेऽब्दे पठानपराजयानन्तरमब्दुस्समदखानः राजपुत्रदेशात् दिल्लीं प्रत्यागतः जूनमासस्य षड्विंशत्यां तारिकायां सर्वानिवाब्यक्षान् पञ्चापं प्राहिणोत् शिष्यगणान् सम्पेष्टुं अगस्तमासस्य षड्विंशतितारिकायां सः लवपुरं न्यवर्तत तत्र च प्रवृत्तिमलब्ध यत्सहस्रद्वयसम्मिताः शिष्याः रूपपुरं नाम पुरं समाचक्रमुः समाक्रान्ताश्च परःसहस्रशः शिष्याः सरहिन्दगताः पठानसैन्यदलदलिताः जैनुद्दीनैहमदखान नेतृत्व निम्नीभूताः पञ्चत्वमापुः शिष्टाश्च कान्दिशीकाः बभूवुः ।

वैरागिवीरोऽपि वैरिवैरनिर्यातनपेशलः भब्बरस्थलस्य दक्षिणतो नेदिष्ठ एवोपशयेषु शयितान् शिष्यदलान् स्वकीयान् संगृह्य कलानौरगतः प्रकाश स्थलेषु प्रकाशमानान् प्राग्रहरान् प्रशिष्यान् प्रोत्साह्य सिंहानिव तान् शल्यकेषु शितशतान् शातन शूलान् कण्ठीकर्तुं संदिदेश ।

मोहम्मदीयः मुहराबखानः
सन्तोखरायश्च मुहम्मदीयः ।
सानोखरायो गतलब्धसंज्ञः
शिष्यप्रहारैर्ननु कान्दिशीकाष्ठः ॥ १२ ॥

प्राणैः स्वकीयैर्ननु तप्यमानः
शिष्यप्रहारैः परिशीर्णकायः ।
शोकाकुलः क्षोभगतो विलीनः
मोहं गतो नैव रतिं प्रपेदे ॥ १३ ॥

साश्वीयपाबातयुतं च सैन्यम्
संघर्षमाधाय चचार चारीम् ।
चौर्यञ्चराः चारभटाश्च शत्रोः
संनह्य सैन्यैः सविशेषवेशाः ॥ १४ ॥

आयान्तु वैधव्यविधिं विधातुम्
विश्वासमाधाय गताश्चरोषम् ।
व्यूहान् विधायात्तधियो विनिद्राः
ते सर्वतः शौर्यरताः बभूवुः ॥ १५ ॥

बटालाचलस्थानगतश्च 'बन्दः' स्थानीयगोपेन स्वसैन्ययुक्तेन संघर्षमाधाय रक्तैकलिप्सुः रक्ताक्तनेत्रः परितप्यमानः कराग्रभागेन करवालकर्षी सकौतुकं मार्गगतान् जिघत्सुः शत्रुप्रियान् शातनकर्मदक्षान् सर्वत्र संवेशगतिं निवेश्य चारप्रियः चाटभटान् चचाम । चञ्चूर्यमाणश्च चमूश्चरास्ते संक्षोदिताः क्षोभगतैश्चशिष्यैः । वीराग्रणी वैरिविधिं दधानः तत्रत्यं सामन्तं पराजय्य सिंहास नाच्यावतार्यतं घारोवालस्थलगतमपि न शान्तम्पश्यन् । दयामाख्यश्च मोहम्मदः तदीयशासकः गुप्तिस्थलं जगाम । तत्रत्याश्च पौराः धनिनः श्रेष्ठिनो वा दलिताः निर्धनाः वा सर्वे समेताः ग्रामान्तरेषु समाजग्मुः । लवपुरगताश्च तेषु केचित्केचि च्च चम्बाख्यपर्वतीय प्रदेशगताः शरणार्थिनो बभूवुः । रूपपुरादिप्रदेशान् लङ्घमानो 'बन्दः' शतद्रुसरित्तीर्णः जालन्धर स्थलमाप्तवान् । स्वल्पं कलहमाकलय्य तातोऽग्रेगतश्चासावमृतसरस्थले वैशाखीयोत्सवसमारोहोल्लासोल्लसितः चैत्रमासे चतुर्दशोत्तरसप्तदशशतकीयेऽब्दे वृहतीं सभामेकां समयोजयत् । गुरुपदमलङ्कृत्योपस्थितश्चात्र धर्मदर्शनमपि समुपादिदेश । गुरुदासभूताश्च गुरुदासपुरं प्राप्तवान् सः तत्र च पौरजानपदपृतनापरिवारपरितुष्टः दुर्गगतिमाकाङ्क्ष्य सः महतीं सैन्यपङ्क्तिं परिवारयामास । फ़रूकिसयारश्चसम्राट् गुरुगौरवगतं वैरागिवीरं कूटकृत्यं समन्तात् प्राचारयन् शिष्यसंघे भेदाभिशंसी तदीयदिव्य परीक्षणमेव "शिष्यधर्मगतमां सभाजन परिवेशमेव परिबन्धयामास" ।

'ख़ालसा' संघश्च द्विधाविभक्तः समयगतं भेदमवाप्य परितो भित्त एव वैरागिवीरव्यूहव्यवहारमपि शिथिलञ्चकार । वैरागिवीरश्चोद्वेगगतः चतुर्थोपायसाध्ये शत्रौ परिसान्त्वमपक्रियेति मन्त्रमनुजुषाणः साहसं स्वकीयं नहि संजिहानः पुनरपि संघं स्वकीयं सुस्थिरं चिकीर्षन् न धैर्ये शिथिलो बभूव । परं सम्राट् कूटयोगैः स्वकीयैः चारैश्च चर्यां चरन् भेदं वृहत्तरं सम्पादयन् समितिञ्जयपि वीरं मृत्युञ्जयमन्त्रसव्य पेक्षिणं कुर्वाणः वैरागिवीरं

स्वकीयेभ्यः साहसेभ्यः विरन्तुमेवादिदेश । गोविन्दगुरोः विधवा सुन्दरीमातापि वैरागिवीरः साहसाद्विरन्तुमेव निर्दिदेश । परं वैरागिवीरः मातुर्निदेशमपि परिजहार । "गुरोराज्ञप्तिपराङ्मुखोऽयं बन्दः" इति पत्राचारविचारचर्यां कुर्वाणा मातासुन्दरी वीरमिमं स्वसाहसानिम्नीचकार । मातुः सुन्दर्याः सन्देशोन्मनाः वीरोऽसौ पुनरपि सङ्कसङ्कटनसाहसं चकार परं सम्राट् सियारः तस्याः पक्षगतान् घनधान्यसेवानियोग व्यवहारान् समादापयन् तदीयपुरुषार्थान् विफलीचकार ।

साम्नो व्यवहारविद्वेषी फ़रूक्सियारः सम्राट् दानै रेव शिष्यसंघं द्विधा संविभाजयन् भेदमनुजुषाणः (दण्डार्हं) शत्रुं च दण्डयितुमर्हमानः सर्वतो दिग्भ्यः सामन्तचक्रमाकलय्य वैरागिवीरविद्रोहविदारणपरो बभूव । सौराष्ट्राधिपतिं मिर्ज़ा-अहमदखानं सय्यदपुरसैन्यपतिमिरादतमन्दखानं औरङ्गाबादपतिं मुहम्मदखानं, कटौचाधिपतिं भीमसिंहं अन्याश्च सैन्यदल संग्राहकान् संग्राह्यासौ लवपुरपुरमानाय्य च बृहत्सङ्गरप्राङ्गणसमाविष्टः रक्तपातविलीनो बभूव । वैरागिवीरवीराः स्वल्पसंख्याकाः अपि साहसपुरःसदा एव समरसम्मुखीनाः सम्राट् सैन्यैः योद्धुमारभन्त ।

वैरागिवीरश्च गुरुदासपुरपुरमधिवसन् गुरुदासनंगलग्रामगत एव शरणमधिगतवान् । बाबाविनोदसिंहभवनगतो विनोदसिंहेन विग्राहितः तदीयसुतेन काहनसिंहेन शरणीकृतः सुरक्षितोऽभूत् । दुर्गगता अपि वैरागिवीरवीराः संनिरुद्धाः वीवधासारप्रसारहीनाः बन्दीकृताः । वैरागिवीरश्चैक एवाभिमन्युरिव कौरवैः चक्रव्यूहव्यूहितः नवपञ्चाशत्संख्याकैः मौहम्मदीयैः परिवार्य बद्धः संयतो बभूव । समाचारोऽयं पञ्चदशोत्तर सप्तदशशततमेऽब्दे दिसम्बरमासस्य द्वाविंशतिभ्यां तारिकायां दिल्लीसम्राजे जहांदारशाहविजयवर्षसमारोहे एव सन्देशितः ।

गुरुदासनंगलतो लवपुरमानीताः वीराः बन्दीकृताः सवै रागिवीराः साह्यहीनाः कान्दिशीकीभावं नैवार्हन् परं सम्राट् तस्य विद्रावणमपेक्षते स्म । निगडबन्धैर्बद्धो बन्दः कन्धरापृष्ठयोरपि रज्जुभिः परिकरितः पदात्पदं प्रचलितुमपि न शशाक । व्याधानायनिगडितसिंह इव च फूत्कर्तुमेव प्रायस्यत् । लोहपञ्जरान्तः प्रवेशितश्च मुगल-

सैन्याध्यक्षद्वयेन च सामजस्थितेन परिचारितः क्षणात् क्षणमपि निःश्वसितुं न शशाक । त्रिसहस्रसंख्याकाश्च शिष्यप्रवीराः प्रासिपुरुषपरिकरिताः पंक्तिबद्धाः प्रतोलितः प्रतोलीः परिचारिताः लवपुरमानीताः । डिण्डिमघोषनादैश्च न्यञ्चिताः । लवपुराच्च दिल्लीं प्रेषिताः । सरहिन्दस्थलं च गाहमानाः विपणिपथेषु परिचालिताः जनगणसमुदायस्यापभाषणानां पात्रीभूताः नितरां निरादरैर्निम्नीकृताः विधिवैधेयाः दुष्प्रापापयशः सात्कृताः महान्तमवसादमासेदुः ।

बन्धीकृतो बन्ध हृतो न रोषम्
　　सिंहो ह्यसौ वीरगतो विलीनः ।
तैः क्रोष्टुभिः कातरभावमाप्तैः
　　कूटैकयुक्तैः नतिमाप्तिलोमाः ॥ १६ ॥

देशो हि मे भारतनामधेयः
　　दग्धो युगेष्वाहितकूटयोगैः ।
द्वैध्येगतैः नैकविधि प्रपन्नैः
　　बाह्यान्तरैः कोपगतैश्च दूनः ॥ १७ ॥

देशैकभक्तो भुवि वीरमानी
　　वीराग्रणीः वीरगतिं विवित्सुः ।
भग्नाशकीर्त्तिः ननु देशजैः स्वैः
　　विद्रोह दोषेण कृता; सदोषः ॥ १८ ॥

दासीकृतैर्दास्य विधौविषक्तैः
　　दायैः परैः दीनगतो विलीनैः ।
सौभाग्यसौहार्दगतिर्नलभ्या
　　स्वातन्त्र्य लब्धेस्तु कथाहिकास्यात् ॥ १९ ॥

दोषो महान्द्रो हृविधेर्विधानम्
　　द्रोहैकमार्गी ननु वञ्चकः स्यात् ।
सः वञ्चितो बन्धकभावमाप्तः
　　वैरागिवीरो भुविधर्षितोऽभूत् ॥ २० ॥

(शतद्वयी) शतीद्वयं शिष्याणां बद्धं न युक्तरूपं राजमार्ग-प्रचाशयातोऽब्दु:समदखान: प्रतिदिनं प्रतिगृहं प्रतिसन्निवेशं च समं सम्प्रविश्य दोषहीनानपि शिष्यजातिगतान् संग्राह्य संगतीकृत्य चेष्टिपशुमारं मारणाय बन्धकान् संविधाय च दिल्लीपुरं प्रावेशयत् ।

सर्वे समेताः निबबन्धुर्हस्तान्
गोविन्दगानं जगुरार्त्तनादैः ।
धन्यो गुरुर्गौरवमार्गगामी
पुत्रो हि योऽपुत्रकृतो नतो न ॥ २१ ॥

धर्मेण हीनाः पशुभिः समानाः
ते श्वापदाः स्वार्थरताः निरीहाः ।
क्रोधं विधायात्त विचारभावाः
संक्रान्तये वंशजान् घातयन्ति ॥ २२ ॥

वशक्रमावायतिमावधानाः
धर्माहिताः सात्त्विकभावगूढाः ।
प्राणैः पणान् पावयितुं च लीनाः
शौर्यं स्वकीयं नहि ह्रावयन्ति ॥ २३ ॥

बद्धो बभौ नेत्रविभावसुभिः
रक्ताक्तवक्राश्च ददाह शत्रून् ।
सः केसरी पञ्जरबद्धमूर्त्तिः
क्ष्वेडां जहौ मत्तगजान् जिघृक्षुः ॥ २४ ॥

परमहो तस्यमदो निरस्तः
सः जम्बुकैः कूटरतैर्निबद्धः ।
क्रोशैर्मृगीणां सुविदीर्णचेताः
सं चूर्णिताः त्रासमुवाह वक्त्रे ॥ २५ ॥

मुमूर्षया मोहरतो रसाढ्याः
मानं विहायोर्मिनताः नवीनाः ।
ते यातनायातविनाः विनिष्ठाः
लोकैः स्मृताः देवसमाः समीयुः ॥ २६ ॥

षोडशोत्तर सप्तदशशतकीयेऽब्दे ख़ीष्टीये फर्वरीमासस्य पञ्चविंशीयां तारिकायां वैरागिवीरः अग्राहपादस्थलगतः नक्र इव श्वभिराकृष्टः त्वक्लुञ्चमालुञ्च्यमानः दिल्लीमानीतः सम्राजाऽमनिख़ानद्वाराऽऽगारविशेषे च निगडबन्धमाबद्ध सप्तविंश्यां च तारिकायाम्। देवलोकयात्रायात्री च सः नरकासुरनारकीणैश्च नृशंसैः नीयमानाः चाण्डालरूपैः सोत्सवसमारोहसंगीतिसदस्यभूतैरिव श्वगणिकल्पैः शिष्यसहस्रयुगलशिरः कर्परकरालवंशप्ररोहदण्डधारिभिः समेतैरेवानुमग्यमानः पार्ष्णिगतमृतमार्जारकायक्लृप्त करवीरस्रक्कलितकरवाल— करालकायमुग़लाध्यक्षधृतपञ्जरपरिघबन्धनः बीभत्सयन्निव प्राकारतोरणगोपुराट्टालिकाप्रतोली — गतपुरुषस्त्री बालवृद्धविषयविशेषकं यममहिषाकारयवन जनयानाश्चगजवाह्यविशेषविभ्रामकः राजधानीं समग्रां अकालकालायसकिङ्किणीकप्रेतनगरप्रतिरूपिणीमिव प्रत्ययमापादयन् कारुण्योद्रेकारावराविणी वैशसस्थलीमिव च प्रतिभाययन् मतिमारुरोह। निष्पर्याणक्रमेलकपृष्ठपरिरोहिता सप्तशती च कृष्णाविचर्मावगुण्ठिता शिष्यवन्दिनां कालायसकिङ्किणीक्वाण कल्पायितकालकवलन कालानुसंयान भावा सर्वतोजगदेव शवशिविरमिव प्रत्याय्यत। प्रासासिप्रोत्कृत्तशिरस्कशिष्याणां शिरांसि कबन्धरहितान्येव प्रासेषू त्तम्भितानि गवां शिरांसीवा संख्यानि पण्यवीथिषु चत्वरचतुःशालेषु रक्ताक्तनेत्रकरङ्कयुक्तप्रेतरङ्का इव नितरां बीभत्सदर्शनानि प्रातीयन्त। अग्राहपादादारभ्य लवपुरद्वारपर्यन्तं व्यूहितानि सैन्यदलानि बद्धवैरागिवीरानुगतागणितशिष्यवीरपरिहासपेशलानि वचांसि व्यञ्जयन्ति नितरां नीचार्थकृत्यानि समभवन्। परं प्राणान् करतलेष्वे व निधायाततायितीक्ष्णात्याचारव्यभिचार वेताल व्यवदायमानमुख धस्मरत्वविलुम्पनायैव वैरिदावदहनसमुन्मुखाः सन्तोऽहोरात्रं नीरन्ध्रतमः पटलपरिकरितप्रान्तेषु दिशां प्रपञ्चेषु परिधावन्तः जुह्वति। बुभुक्षितः किं न करोति पापं क्षीणाः नराः निष्करुणाः भवन्ति।

सूक्तं च नैवार्थगतिं जगाम
सत्यं बृहत्सुन्दरमत्र जातम् ॥ २७ ॥

बुभुक्षिताः युद्धरताः निरोहैः
संरोधमाधाय गताः न रोषम्।
प्रोत्तेजिताः वीरगतौ विलीनाः
विध्वंसिताः द्रोहरतैः स्वकीयैः ॥ २८ ॥

चिन्त्रीयमानचेतसश्च सम्राजो मौहम्मदीयाः शत्रुविद्रोहद्रोह-वैफल्येऽपि सुतरां त्रासतत्परा एव शिष्यसंघसन्दोह समवायव्यवसाय समैक्यसंत्यागदूनाः जनगणप्राणाहुतिप्रदान परिगतपरिणामसव्यपेक्षिणः स्वीयसंघे चासारगर्भितां विवदमानाः सन्तोषमोहेऽप्यसम्भाव्यप्रजाप्रतीतिमलभभावाः युवजनबलिदाननिद्राणाः दिनेष्वपि निशीथकालमवेक्षमाणाः स्वकीयशासनस्य इस्लाममत परिवर्तप्रसाहबलात्कारदून-शिष्यगणसमूहसन्दानपाशिताश्च मोहलीना अपि व्यपदेशदीनाः सिद्धयन्त्रा अप्यसम्बद्धमन्त्राः विहितरोषाः अप्यसुकृद्दीप्तदोषाः विनिहितसैन्यप्रचारा अप्यसन्निहिततीर्थ व्यवहाराः वायुभक्षका अपि स्नायुदिधक्षकाः मनःसुलोना अपि वचः सु क्षोणः मानमोहिता अपि कामकोपिताः क्रीडीकृताः विद्रोहदोहवेदनाभिः शौर्यशूनाः श्वापदा इव क्रौर्यकलिपतव्यापदाः स्वस्थाः अपि दुःस्थाः वह्नौ पतङ्गानि वाह्वध्वं साहुतिक्रतुषु जुह्वतश्च शिष्ययूनो विलोकयन्तः रभसाचरितैश्च स्वकीयैः दोदूयमानाः वैशससमनाय च बद्धान् परिवर्हयन्तः शतमेव बन्दिजनं प्रत्यहं तरवारिधारविधेदीकरणाय कटिबद्धाः बभूवुः। षोडशोत्तरसप्तदशशतीयेऽब्दे मार्चमासस्य पञ्चभ्यां तारिकायां बद्धानां कालपाशाः गलेषु विगलयितुमारब्धाः। शरवराह-खानश्च पादपाशिकाः चाण्डालाध्यक्षीकृतः। इस्लामधर्मपरिणतिरेव वैशसमोक्ष पणवन्धोऽभवत्। सर्वश्च शिष्यबन्दी जन्मभूप्रकाशविस्तारे जन्मोपलभ्य "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति शपथपथ प्रवृत्तः प्राणाहुतिमेव परमं कर्त्तव्यं मन्यमानः इस्लामधर्मदीक्षां न्यक्चकार। एकोऽपर मतिक्रम्मैव वैशसयज्ञपशुभावाय स्पृह्याञ्चकार।

वैरागिवीरवीरसैन्य समूहे वैशसकरवालकवलीकृते कल्किशरीर-समुद्भवसमपेक्षमाणः वैरागिवीर पृतना पतयः केशवमलभमानाः केशवं शवारूढमेव व्यलोकयन्। मासत्रयाय न कोऽपि वद्धो बलीकृतः। जूनमासस्यैकोनविंश्यां तारिकायं तस्मिन्नेव वर्षे सुपुत्रेणाजयसिंह-समेतः राजसिंह-रामसिंह-फतेहसिंह-गुलाबसिंहबख्शी सहितश्च दिल्ली-दुर्गानित् स संब्यूहवैव यात्रोरसवसमारोहसमेतः पौरंजानपदैश्च-नुगम्यमानः वध्यशिलारोहणाय परिकरितः किर्मीररक्तोष्णीषवेष्टित-मूर्धा लोहपञ्जरप्रवेशितो निगठितः सामन्तपृष्ठमारोहितः बद्ध-परिवारानुसारितः पौरराजपथेषु परिचारितः मिहिरावलीविराजमान-कुतुबुद्दीनबख्त्यारसमाधिं परितो भ्रामितश्च इष्टिपशुमारणाय

सामजादवतार्चितः वधात्प्रागिस्लामसंधारणाय निबंद्धः प्राणाहुतिमेव प्रेयसीममंस्त । मौहम्मदमतावलम्बननिराकृतिद्वेषदग्धाश्चाततायिनः नृशसनमेव नीतिमनुमन्यमानाः नृशंसाः जाङ्गुलिकजग्धविषविसयी इव सर्पाः अविषह्यावेशविवशाः बिस्फूर्जितविषरसा इव विलेशयाः क्रव्यादनाः कुणप्राशनाः इवा सृक्पानपिपासवः लोकातिगगौरवं लाघवपदमर्पयन्तः निम्नमनसाः मनोविकारविष दूषणाः विश्वाखिल-खलकर्मस्खलितस्खलनविसंष्ठुलाः विद्रोहिदोषघर्षणदग्धाः हृद्दारण-दारुणकर्मदक्षाः विद्रधिविस्फारणविकटविशङ्कटशवशायकाः शवाशनाः इव शरारवः शेमुषीशातनशूराः शिरश्छेदवेदविज्ञानवीक्षणाः वृकाः वैरागिवीरस्याजयसिंहभिधसुतं चतुरब्ददेशीयमेव वैरागिवीराङ्कगतं विधाय पितरमेव तदीयमूर्धावच्छेदक्रियालवः चिकीर्षितं यद् नैवानुमो-दितमवापुस्तदा तरवारिकृत्ताङ्गखण्डखण्डितमङ्गजं स्वकीयं विलोक्यापि धीराग्रणीः धैर्यधुराधौरेयः धर्मधुराधुरीणः दुष्प्रापयशो-विलीनो विलयमेव ववार । परःशतगृध्रावलुप्यमानकृत्तकन्धराविलुप्य-मानचेता अपि न चचाल संकल्पे । मुल्लाहगणगीयमान पैगम्बरतेजः तारतम्योऽपि न स्वीचकार मौहम्मदीयानाम् व्रतम् । गोमांस-भक्षणायापि प्रेरितो मुहुर्मुहुः सः संचस्खालन पदे एकस्मिन्नपि । दृषल्लोष्ठप्रहारैरपि प्रहातोनोद्वेगमनुवभूव । सारभाण्डभूगृहगतोऽपि वृश्चिककाकोदरकीटव्रतविकासितोऽपि साहसं न विससर्ज । वज्र-कठोरहृदयेन स्वमातरं भुवं प्रीणयितुमिच्छुः प्राणात्ययेऽपि प्राणपरित्यागमेव प्रेष्ठं प्रष्ठं च कर्त्तव्यं चिकीर्षुः जघन्यापद्यातना-निर्यातितोऽपि धर्मध्वंसनं नैवानुमेने । योगमुद्राविनिद्रश्च दंशशतैरपि देदह्यमानो न मुमोच चीत्कारान् भैरवनादनादो (चोत्कनाद) नीरवाकारः । नृसिंह इवापरो न शशाक नृभक्षान् दैत्यान् पुरःस्थितान् । परं दैत्यदारितदारकः सहे यासृक्स्रावसौरभम् । हताः पुराण—प्रत्ययाः । मृताः मिथकवादाः । दीर्णाः दुरितध्वंसनिदान-नदीष्णाः नीतयः । दिव्यास्त्रलाभाः जाताः विफलाः । गलितं तपः तपोधनानाम् । भरिता भूः भयङ्करश्वापदाकारकरालकङ्काल वेतालविकारकृत्यैः । क्व गता इन्द्रमहमहत्ता । दैत्यदारणदोषश्च क्व गताः । कलिकालकिल्विषकिर्मीरा च । कृतिः कीनाशकेतोः कालमहिषमलमिसकायविकास विहिततमः प्रसरप्रचारपेशलैव सज्जन-चरितमधरीचकार ।

म्लेच्छैरुद्वि ज्यमाना भूः
वर्णखड्गार तर्जिता ।
कौशिकैः घृत्कृताढ्या हि
केशिभिः कीर्णकल्मषा ॥ २९ ॥

द्रोहागतिर्देशगता न दम्या
भीभैरवीध्वान धृता च म्लेच्छैः ।
संसारसञ्चार विकाररोहे
दैत्यैकधूर्त्तिर्ननु वर्धनाढ्या ॥ ३० ॥

पापस्य पोषः प्रविसर्पमाणः
धर्मैकबोषश्च वितीर्णरूपः ।
कालास्यकण्ठैः कवलीकृताश्च
केका रवाः आर्त्तरुतैर्निलीनाः ॥ ३१ ॥

ऋतम्भरा भारतभूर्विपन्ना
द्विष्टैर्धृता धर्षितभावनीभा ।
मृत्युञ्जये जापरता न जाता
वेदैस्मृति विस्मृतिमादधाना ॥ ३२ ॥

सप्ताहाभ्यन्तर सप्तशतं मृतमुण्डानां धराशयिभूतं रुधिर-प्लावविसरसंलिप्तं सत् तरुशाखास्वपि कबन्धकदम्बावलम्बसङ्कटं वलिभुग्गृध्रकूट कवलनविकटं बीभत्सदर्शनं वैरागिवीरमनोविक्षोभदुर्धरं धर्मदार्ढ्यधुरां वीरधौरेयस्य नाधरीचकार । नीरन्ध्रान्धकारबहलां कारामधिवसन् वैरागिवीरः निश्वसितुमपि न शशाक । वृश्चिकाशी-विषविसर्गं बहुलायामस्यां विषविस्फूर्जित विकारविहितमोहनोऽसौ सर्वतनोऽपि निश्चेतन न एव साहसविसरं विसस्मार । दयनीयदशामस्य पश्यन्तोऽपि ते देशदोषविमुखाः मृतपूर्वमपि मारणाद्विरमन्तः सदाक्षिण्या एव प्रातीयन्त ।

प्रभातायां रजन्यां कस्यां नग्नासिधृतप्रहरिद्वयेनानवृतकपाटं द्वारं विलोक्य वैरागिवीरः स्वकीयां चरमवेलामनुमीय सर्वकर्त्तारं विधातारं ववन्दे ।

स: वन्दमानश्चरणौ विधातुः
विद्वान्मनीषी मनसा विदाङ्कृत् ।
देशैकरक्षाविधिमात्मकीयम्
सौभाग्य संस्तारधिया बभार ॥ ३३ ॥

रक्ताक्तनेत्रैश्च यमाग्रदूतैः
चाण्डालमुख्यैर्न भियं प्रपेदे ।
रक्तान्त्रनेत्रो विहितेशभावः
कामांश्च तान् दग्धुमियेष रुष्टः ॥ ३४ ॥

परम्—

योगैकमुद्राधृतरोषभावः
सन्तोषमाधाय गतो न मोहम् ।
दग्धास्त्रदीर्णश्च शरीरशैले
स्वां चेतनां चर्मरतो न मेने ॥ ३५ ॥

उल्लुञ्चितश्चर्मणि कर्मदक्षः
धैर्यैकरक्षारतिमादधानः
प्राणैः प्रियैः त्राणपरैश्च मुक्तः
स्वां मोहिनीं मातृधरां ससञ्ज ॥ ३६ ॥

हतो हि वीरः स्वशरीरछेदैः
यशःशरीरे नहि लोपमागात् ।
ऐतिह्य पृष्ठैक विवादविद्धो
नित्यां चकारात्मचरैः स्वकीर्त्तिम् ॥ ३७ ॥

इति श्री सुदर्शनशर्मणा विरचिते वीरवैरागिचरिते
चतुर्थः उच्छ्वासः समाप्तः ॥

# अथ भरतवाक्यम्

एणीवधावात्तविरागभाव
ऐणद्वयस्यार्त्तिविचारमूढः ।
सः लक्ष्मणो लक्षणगौरवेण
वैरागिवीरैकधियं प्रपन्नः ॥ १ ॥

काश्मीरदेशीययुवा सुबुद्धः
व्याधो महान्नायकवृत्तिकल्पी ।
देशैकरक्षाधृतसत्यसन्धिः
वैर्यंप्रणीवैरमुवाह दूतः ॥ २ ॥

आत्माभिमानी द्विविधां दधानः
गोविन्दगानेन गिरां गिरिष्ठाः ।
सः शौर्यधृन्मूढधियां विनेता
धैर्येण धीविक्रममाजुहाव ॥ ३ ॥

सुदर्शनः कौन्दनिरात्मलीनः
वैरागिवीरस्य मनोज्ञधैर्यम् ।
सम्भाव्य नारायणपौत्ररूपः
विद्यावतीमानधियासमेतः ॥ ४ ॥

सौभाग्यतः काव्यधिया विनोदी
तं नानकं काव्यधिया शशंस ।
स्वं भारतं भारगतं विविच्य
तद्गौरवं मानधिया बबन्ध ॥ ५ ॥

स्वैः रूपकैर्भारतनाट्यगर्भैः
ऐतिह्य सम्भारविकारवृत्तैः ।
श्रीभारतीगौरवगानगुप्तः
वाङ्माधुरी मानरतो विनीतः ॥ ६ ॥

दुर्भाग्यतो मानरतो न जातः
द्विष्टैर्जनैर्द्रोहरतो प्रलीनः ।
स्वां मानवीं मानरतिं जुषाणः
मात्सर्यमोहैकहतैर्विकीर्त्तिः ॥ ७ ॥

कार्यं विधायात्मनि तोषलीनः
वाङ्माधुरीगायनगौरवीणः ।
स्वन्तरे नन्दननामधेये
शास्त्रीतिनाम्नि प्रविधाय सूक्तिम् ॥ ८ ॥

पौराणतत्त्वैकविचारकारी
नाथोत्तरं नाम जगच्च विभ्राम् ।
विद्वान् मनीषी मनसा विवाङ्कृत्
तद्गौरवेणात्तरतिर्नमामि ॥ ९ ॥

॥ समाप्तश्चायं ग्रन्थः ॥

अगस्तमासस्य नवम्यां तारिकायाम् त्रिनवत्युत्तरनवशतोत्तर-
सहस्रतमे ख्रीष्टीयवर्षे ।

इति प्राक्तनीयसंस्कृतविभागीयाध्यक्षेण पञ्चापदेशीय बठिण्डास्थलीय-
सर्वकारीय-राजेन्द्रमहाविद्यालयीयेनाद्यतवीयेन च १-८-१९९२
तारिकायाः आरभ्य फ़ाजिल्कास्थलीय-सर्वकारीय
मुन्शीराम-महाविद्यालयीय प्राचार्य (प्रिंसिपल) भूतेन

**श्री सुदर्शन शर्मणा**

विरचितम् वीरवैरागिचरितम् नाम गद्यकाव्यमवसितम् ।

